131B/3 **अथ विश्वामित्रध्यानम्**

**(नृसिंहप्रासादे)**

हिरण्यगर्भसदृशं जटामकुटधारिणम् ।
कुमुद्वतीपतिं शान्तं विश्वामित्रं भजाम्यहम् ।। **40**

**(पीतवर्णः)**

131B/4 **अथ काश्यपध्यानम्**

**(नृसिंहप्रासादे)**

ध्यायेन्मरीचितनयं जटावल्कलधारिणम् ।
जपाक्षस्रग्धरं पत्नीसहितं मुनिपुङ्गवम् ।। **41**

**(कृष्णवर्णः)**

131B/5 **अथ जमदग्निध्यानम्**

**(नृसिंहप्रासादे)**

शान्तं जितारिषड्वर्गं भृगुपुत्रं महाद्युतिम् ।
दण्डाक्षसूत्रपाणिं च जमदग्निं नमाम्यहम् ।। **42**

**(रक्तवर्णः)**

131B/6 **अथ वसिष्ठध्यानम्**

**(नृसिंहप्रासादे)**

तपोनिधिं दयासिन्धुं मित्रावरुणसम्भवम् ।
स्रग्दण्डपाणिं वरदं वसिष्ठं प्रणमाम्यहम् ।। **43**

**(श्वेतवर्णः)**

132A/1

## अथ अत्रिध्यानम्

(नृसिंहप्रासादे)

विरिञ्चितनयं देवं साक्षसूत्रकमण्डलुम् ।
अनसूयापतिं शान्तमत्रिं निष्कल्मषं भजे ।। 44

(कृष्णवर्णः)

132A/2

## अथ द्विभुजागस्त्यध्यानम्

(मत्स्यपुराणे तत्पूजाकल्पे)

ततश्श्वेतो द्विबाहुश्च साक्षसूत्रकमण्डलुः ।
अगस्त्य इति शान्तात्मा बभूव मुनिसत्तमः ।। 45

(श्वेतवर्णः)

132A/3

## अथ चतुर्भुजागस्त्यध्यानम्

(पर्जन्यकल्पे मत्स्यपुराणे च)

लोपामुद्रासमेतं घटभुवमनघं पीतपाथोनिधानम्
वाताप्यद्रीन्द्रवज्रं तदनुजशमनं विन्ध्यगर्वापहारम् ।
वन्देऽगस्त्यं सिताभं करधृतविलसत्कुण्डिकापुस्तकाक्षं
व्याख्यामुद्रासमेतं सुरवरविनुतं वृष्टिविघ्नप्रशान्त्यै ।। 46

(श्वेतवर्णः)

132A/4

## अथाष्टनदीनां ध्यानं वर्णनामानि च

(शैवागमे)

गङ्गा च यमुना चैव गोदा कृष्णा तथैव च ।
रेवा तु तापिता चैव वेणी चैव सरस्वती ।। 47

गङ्गाद्यष्टनदीनां च नामानि च यथाक्रमम् ।
दक्षिणे तु करे कुम्भं वामे वरुणपाशकम् ।। 48
दधाना द्विभुजाः पूज्या नद्यो मकरवाहनाः । 48A

एतासां वर्णाः -

सिता नीला पाटला च कृष्णा तु कनका तथा ।
रक्ता चैव तु सिन्दूरा तथा गोक्षीरवर्णका ।। 49
एते चाष्टौ नदीनां च पृथग्वर्णा यथाक्रमम् । 49A

एताः अष्टौ प्रतिमाः समानरूपाः । अतः एकैव प्रतिमा लिखिता ।

132B/1 **अथ चतुर्दशमनूनां ध्यानम् वर्णः पितृनाम पत्नीनाम पुत्रनामानि च**

**(शैवागमे सिद्धान्तशेखरे च । मन्वादितिथयः कालप्रकाशिकायां, मन्वन्तरऋषिनामानि कृष्णकथासारसङ्ग्रहे पुराणे च । मन्वन्तरहरिनामानि इन्द्रनामानि च भागवते)**

**तत्र स्वायंभुवमनुध्यानम्**

**(शैवागमे सिद्धान्तशेखरे च)**

आद्यः स्वायंभुवो ब्रह्मा पुत्रो मनुरिति स्मृतः ।
शतरूपा तस्य भार्या क्षत्रधर्ममनुव्रतः ।। 50
प्रियौ व्रतोत्तानपादौ तस्य कन्यास्तथा त्रयः ।
आकूतिर्देवहूतिश्च प्रसूतिः श्वेतवर्णवान् ।। 51
क्षत्रयोग्यास्त्रधारी तु सर्वेषां जगतां पतिः ।
यत्र धर्माश्च विविधाः चातुर्वर्ण्याश्रिताश्शुभाः ।। 52

**(श्वेतवर्णः)**

श्वेतवर्णः । पिता ब्रह्मा । पत्नी शतरूपा । पुत्रौ प्रियव्रतोत्तानपादौ । कन्याः आकूतिः, देवहूतिः, प्रसूतिः । आश्वयुजशुद्धनवमी । स्वायंभुवमन्वादिः । हरिनाम यज्ञः । इन्द्रनाम यज्ञः ।

एतस्य स्वायंभुवमन्वन्तरस्य ऋषिनामानि - मरींचिः, क्रतुः, अत्रिः, अङ्गिराः, पुलहः, वसिष्ठः, पुलस्त्यः ।

132B/2

## अथ स्वारोचिषमनुध्यानम्

(शैवागमे सिद्धान्तशेखरे च)

स्वारोचिषो द्वितीयस्तु मनुरग्नेस्सुतोऽभवत् ।
द्युमस्तुषेणरोचिष्मत्प्रमुखास्तस्य चात्मजाः ।। 53

ऊर्जा तु तस्य भार्यासीद् ब्राह्म्यं धर्ममनुव्रतः ।
तप्तकार्तस्वराभासः सर्वेषां जगतां पतिः ।। 54

(हेमवर्णः)

पिता अग्निः । पत्नी ऊर्जा । पुत्रा रोचिष्मदादयः । कार्त्तिकशुद्धद्वादशी । स्वारोचिषमन्वादिः । हरिनाम विभुः । इन्द्रनाम रोचनः ।

132B/3 एतन्मन्वन्तरऋषिनामानि - ऊर्जस्तम्भः, वृषभः, प्राणः, दत्तः, जार्वरिः, निश्चरः, अत्रिः ।

133A/1

## अथ उत्तममनुध्यानम्

(शैवागमे सिद्धान्तशेखरे च)

तृतीय उत्तमो नाम प्रियव्रतसुतो मनुः ।
भार्योषासृञ्जयजपाहोत्राद्यास्तस्य चात्मजाः ।। 55

रक्तवर्णोऽस्त्रधारी तु क्षात्रं धर्ममनुव्रतः ।
चतुर्णामेकसप्तत्या युगानां पतिरीश्वरः ।। 56

(रक्तवर्णः)

एतन्मन्वन्तरऋषिनामानि - अर्धबाहुः, सवनः, सुतपाः, रजः, घनः, शुक्लः, गोत्रः ।

133A/2

## अथ तामसमनुध्यानम्

**(शैवागमे सिद्धान्तशेखरे च)**

चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तामसः ।
ख्यातिः पत्नी केतुमन्त इत्याद्यास्तत्सुता मताः ।। **57**

प्रियव्रतसुतस्त्वेषः क्षात्रं धर्ममनुव्रतः ।
हरिद्वर्णोऽस्त्रधारी तु सर्वेषां जगतां प्रभुः ।। **58**

**(हरिद्वर्णः)**

पिता प्रियव्रतः । पत्नी ख्यातिः । पुत्रा केतुमन्ताद्याः । भाद्रपदशुद्धतृतीया । तामसमन्वादिः । हरिनाम हरिः । इन्द्रनाम त्रिशिखः ।

एतन्मन्वन्तरऋषिनामानि - ज्योतिर्धामा, पृथुः, चैत्रः, वानकः, काव्यः, पीवरः, अग्निः ।

133B/1

## अथ रैवतमनुध्यानम्

**(शैवागमे सिद्धान्तशेखरे च)**

पञ्चमो रैवतो नाम पूर्वयोरनुजस्स्मृतः ।
पत्नी विन्ध्यावलिः पुत्राः दत्तकार्जुनपूर्वकाः ।। **59**

क्षत्रप्रियव्रतसुतो वर्णं श्यामं समाश्रितः ।
सदा खड्गाद्यस्त्रधारी सर्वेषां जगतां पतिः ।। **60**

**(श्यामवर्णः)**

पिता प्रियव्रतः । पत्नी विन्ध्यावलिः । पुत्राः दत्तकार्जुनादयः । फाल्गुनकृष्णामा-वास्या । रैवतमन्वादिः । हरिनाम वैकुण्ठः । इन्द्रनाम विभुः ।

एतन्मन्वन्तरऋषिनामानि - हिरण्यरोमा, वेदश्रीः, ऊर्ध्वबाहुः, सोमपः,. वेदबाहुः, सुधामः, सुतापः ।

133B/2

## अथ चाक्षुषमनुध्यानम्

(शैवागमे, सिद्धान्तशेखरे च)

षष्ठस्तु चक्षुषः पुत्रः चाक्षुषो नाम विश्रुतः ।
आदित्यपौत्रस्तत्पत्नी कान्तिस्तस्यात्मजान् शृणु ।। 61

तथा पुरुषसुद्युम्नप्रमुखाः ताम्रवर्णवान् ।
ब्राह्मव्रतधरो देवस्सर्वेषां जगतां प्रभुः ।। 62

(रक्तवर्णः)

पिता चक्षुः । पत्नी कान्तिः । पुत्राः पुरुषसुद्युम्नाद्याः । पुष्यशुद्धैकादशी । चाक्षुषमन्वादिः । हरिनाम अजितः । इन्द्रनाम मन्द्रद्युम्नः ।।

एतन्मन्वन्तरऋषिनामानि - हविर्भानुः, सुमेधाः, सहिष्णुः, विरजः, मधुः, ऋषभः, अतिनामः ।

134A/1

## अथ वैवस्वतमनुध्यानम्

(शैवागमे सिद्धान्तशेखरे च)

वैवस्वतो मनुर्नाम पुत्रः सूर्यस्य सप्तमः ।
इक्ष्वाकुप्रमुखाः पुत्राः पत्नी रिष्टिरितीरिता ।। 63

क्षात्रं ब्राह्म्यं च संश्रित्य स्मृतिकर्ता भुवः पतिः ।
सौवर्णवर्णः पद्माक्षो जगतां प्रभुरीरितः ।। 64

(स्वर्णवर्णः)

पिता सूर्यः । पत्नी रिष्टिः । इक्ष्वाकुप्रमुखाः पुत्राः । आषाढशुद्धदशमी । वैवस्वतमन्वादिः । हरिनाम वामनः । इन्द्रनाम पुरन्दरः ।

एतन्मन्वन्तरऋषिनामानि - कश्यपः, अत्रिः, भरद्वाजः, विश्वामित्रः, गौतमः, जमदग्निः, वसिष्ठः ।

134A/2

## अथ सूर्यसावर्णिकमनुध्यानम्

(शैवागमे सिद्धान्तशेखरे च)

अष्टमस्सूर्यपुत्रस्तु सावर्णिर्भविता मनुः ।
निर्मोहविरजस्काद्याः पुत्राः पत्नी तु देविका ।। 65

क्षत्रियो लोकविख्यातो वर्णं श्यामं समाश्रितः ।
चतुर्णमिकसप्तत्या युगानां प्रभुरीरितः ।। 66

(श्यामवर्णः)

पिता सूर्यः । पत्नी देविका । पुत्राः निर्मोहविरजस्काद्याः । माघशुक्लसप्तमी । सूर्यसावर्णिकमन्वादिः। हरिनाम सार्वभौमः । इन्द्रनाम बलिः ।

एतन्मन्वन्तर-ऋषिनामानि - व्यासः, परशुरामः, गालवः, दीप्तिमान्, कृपः, अश्वत्थामा, ऋष्यशृङ्गः ।

134B/1

## अथ दक्षसावर्णिकमनुध्यानम्

(शैवागमे सिद्धान्तशेखरे च)

नवमो दक्षसावर्णिः मनुर्वरुणसम्भवः ।
पत्नी परा धृष्टकेतुरित्याद्यस्तत्सुता मताः ।। 67

क्षत्रियो लोकविख्यातो वर्णं रक्तं समाश्रितः ।
चतुर्णमिकसप्तत्या युगानां प्रभुरीरितः ।। 68

(रक्तवर्णः)

पिता वरुणः । पत्नी परा । पुत्राः धृष्टकेत्वादयः । फाल्गुणशुक्लपूर्णिमा । दक्षसावर्णिकमन्वादिः। हरिनाम ऋषभः । इन्द्रनाम अद्भुतः ।

एतन्मन्वन्तरऋषिनामानि - मेधातिथिः, वसुः, सत्यः, सवनः, हव्यवाहनः, ज्योतिष्मान्, द्युतिमान् ।

134B/2

## अथ ब्रह्मसावर्णिकमनुध्यानम्

(शैवागमे सिद्धान्तशेखरे च)

दशमो ब्रह्मसावर्णिः उपश्लोकमुनेस्सुतः ।
तत्सुता भूरिषेणाद्यास्तत्पत्नी बृहती मता ।। 69

ब्राह्मणो लोकविख्यातो वर्णं श्वेतं समाश्रितः ।
सर्वेषां जगतां भर्ता पूर्वोक्तमनवो यथा ।। 70

(श्वेतवर्णः)

पिता उपश्लोकमुनिः । पत्नी बृहती । पुत्रा भूरिषेणाद्याः । आषाढशुक्ल-पूर्णिमा । ब्रह्मसावर्णिकमन्वादिः । हरिनाम विष्वक्सेनः । इन्द्रनाम शम्भुः । एतन्मन्वन्तरऋषिनामानि - आपोमूर्तिः, हविष्यन्तः, नाभागः, अप्रतिमः, वसिष्ठः, सुकृतिः, सत्यः ।

135A/1

## अथ धर्मसावर्णिकमनुध्यानम्

(शैवागमे सिद्धान्तशेखरे च)

मनुर्वै धर्मसावर्णिः एकादशम आत्मवान् ।
धर्मपुत्रस्तत्सुतास्तु सत्यधर्मादयो मताः ।। 71

दीक्षा पत्नी रक्तवर्णः क्षात्रं धर्ममनुव्रतः ।
चतुर्णामिकसप्तत्या युगानां प्रभुरीरितः ।। 72

(रक्तवर्णः)

पिता धर्मः । पत्नी दीक्षा । पुत्राः सत्यधर्मादयः । श्रावणकृष्णाष्टमी । धर्मसावर्णिकमन्वादिः । हरिनाम धर्मसेतुः । इन्द्रनाम विधृतिः ।

एतन्मन्वन्तरऋषिनामानि - हविष्मन्तः, वरिष्ठः, अग्नितेजाः, निश्चलः, आरुणिः, वृष्टिः, अनघः ।

135A/2

## अथ रुद्रसावर्णिकमनुध्यानम्

**(शैवागमे सिद्धान्तशेखरे च)**

भविता रुद्रसावर्णिः रौद्रो द्वादशमस्तथा ।
देवानुदेवास्तत्पुत्राः पत्नी त्वार्या इति स्मृता ।। **73**

क्षत्रधर्मं समाश्रित्य श्यामवर्णः प्रतापवान् ।
चण्डप्रशासनस्त्वासीत् सर्वेषां जगतां प्रभुः ।। **74**

**(श्यामवर्णः)**

पिता रुद्रः । पत्नी आर्या । पुत्रा देवानुदेवाः । कार्त्तिकशुक्लपूर्णिमा । रुद्रसावर्णिकमन्वादिः । हरिनाम स्वाधामा । इन्द्रनाम ऋतुधामा ।

एतन्मन्वन्तरऋषिनामानि - तपोनिधिः, सुतापः, तपस्वी, तपोमतिः, तपोधृतिः, द्युतिः, तपोमूर्तिः ।

135B/1

## अथ वेदसावर्णिकभौत्यमनुध्यानम्

**(एतस्य अग्निसावर्णिक इति नामान्तरम्)**

**(शैवागमे सिद्धान्तशेखरे च)**

मनुस्त्रयोदशो भाव्यः वेदसावर्णिरात्मवान् ।
आसीद्वेदशिरः पुत्रो ब्राह्मं धर्ममनुव्रतः ।। **75**

चित्रसेनादयः पुत्राः त्रयी पत्नी सुसंमता ।
चतुर्णामिकसप्तत्या युगानां पतिरीश्वरः ।। **76**

**(श्वेतवर्णः)**

पिता वेदशिराः । पत्नी त्रयी । पुत्राः चित्रसेनादयः । चैत्रशुक्लपूर्णिमा । वेदसावर्णिकमन्वादिः। हरिनाम योगीश्वरः । इन्द्रनाम दिवस्पतिः ।

एतन्मन्वन्तरऋषिनामानि - निष्प्रवापः, तत्त्वदर्शी, धृतिमान्, अव्ययः, निरुत्सुकः, सुतापः, निर्मोहः ।

135B/2

## अथ इन्द्रसावर्णिकरौच्यमनुध्यानम्

(शैवागमे सिद्धान्तशेखरे च)

मनुस्तु इन्द्रसावर्णिः चतुर्दशम ईरितः ।
इन्द्रपुत्रस्तत्सुतास्तु ह्युरुगम्भीरकादयः ।। 77

नीलवर्णो धनुर्धारी क्षात्रं धर्ममनुव्रतः ।
अभूत्पत्नी मतिस्तस्य सर्वेषां जगतां प्रभुः ।। 78

(नीलवर्णः)

पिता इन्द्रः । पत्नी मतिः । पुत्रा उरुगम्भीरकादयः । ज्येष्ठशुक्लपूर्णिमा । इन्द्रसावर्णिकमन्वादिः । हरिनाम अपहतम् । इन्द्रनाम शुचिः ।

एतन्मन्वन्तरऋषिनामानि - अग्नीध्रः, अग्निबाहुः, यूचिः, युक्तः, माधवः, अयुतः, शुक्रः ।

136A

## अथ स्वायंभुवादिचतुर्दशमनूनां मन्वादितिथयः

(कालप्रकाशिकायाम्)

आश्वयुक्शुक्लनवमी कार्तिकी द्वादशी सिता ।
तृतीया चैत्रमासस्य सिता भाद्रपदस्य च ।। 79

फाल्गुनी चाप्यमावास्या पौषी चैकादशी सिता ।
सिताषाढी च दशमी माघे च सितसप्तमी ।। 80

फाल्गुनी पौर्णमासी च आषाढे शुक्लपूर्णिमा ।
श्रावणस्याष्टमी कृष्णकार्त्तिकी शुक्लपूर्णिमा ।। 81

चैत्री तु पूर्णिमा चैव ज्येष्ठे शुक्ला च पूर्णिमा ।
एतास्स्वायंभुवादीनां मनूनां तिथयः क्रमात् ।। 82

**अथ स्वायंभुवादिचतुर्दशमनूनां पृथक्पृथक्सप्तसङ्ख्याक्रमेण ऋषीणां नाम्नां समष्टिश्लोकाः**

मरीचिः क्रतुरत्रिश्च अङ्गिराः पुलहस्तथा ।
वसिष्ठश्च पुलस्त्यश्च मनोः स्वायंभुवस्य ते ।। 83

ऊर्जस्तम्भश्च ऋषभो प्राणो दत्तश्च जार्वरिः ।
निश्चरोऽत्रिस्तथा सप्त स्वारोचिषमनोर्मताः ।। 84

अर्धबाहुश्च सवनः सुतपाश्च रजो घनः ।
शुक्लो गोत्र इमे सप्त ऋषयस्तूत्तमस्य तु ।। 85

ज्योतिर्धामा पृथुश्चैत्रो वानकः काव्यपीवरौ ।
अग्निश्चेति तथा सप्त ऋषयस्तामसस्य तु ।। 86

हिरण्यरोमा वेदश्रीः ऊर्ध्वबाहुश्च सोमपः ।
वेदबाहुस्सुधामश्च सुतापो रैवतस्य हि ।। 87

हविर्भानुस्सुमेधश्च सहिष्णुर्विरजो मधुः ।
ऋषभश्चातिनामश्च मुनयश्चाक्षुषस्य ते ।। 88

कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः ।
जमदग्निर्वसिष्ठश्च मनोर्वैवस्वतस्य ते ।। 89

व्यासः परशुरामश्च गालवो दीप्तिमान् कृपः ।
अश्वत्थामा ऋष्यशृङ्गः सूर्यसावर्णिसम्मताः ।। 90

मेधातिथिर्वसुस्सत्यः सवनो हव्यवाहनः ।
ज्योतिष्मान् द्युतिमानेते दक्षसावर्णिसङ्गताः ।। 91

अपोमूर्तिर्हविष्यन्तो नाभागोऽप्रतिमस्तथा ।
वसिष्ठस्सुकृतिस्सत्यः ब्रह्मसावर्णिसंमताः ।। 92

हविष्मन्तो वरिष्ठश्च अग्नितेजाश्च निश्चलः ।
आरुणिर्वृष्टिरनघो धर्मसावर्णिसम्मताः ।। 93

तपोनिधिस्सुतापश्च तपस्वी च तपोमतिः ।
तपोधृतिर्द्युतिश्चैव तपोमूर्तिस्तथापरः ।। 94

ऋषयो रुद्रसावर्णेः सप्त ते परिकीर्तिताः ।
निष्प्रवापस्तत्त्वदर्शी धृतिमानव्ययस्तथा ।। 95

निरुत्सुकस्सुतापश्च निर्मोहश्च तथापरः ।
ऋषयो वेदसावर्णेः सप्त वै परिकीर्तिताः ।। 96

अग्नीध्रो ह्यग्निबाहुश्च यूचिर्युक्तश्च माधवः ।
अयुतश्शुक्र इत्येते इन्द्रसावर्णिसम्मताः ।। 97

एते वै मुनयः प्रोक्ताः क्रमात्स्वायम्भुवादिषु । 97A

136B

## अथ स्वायम्भुवादिचतुर्दशमनूनां इन्द्रनामानि
### (भागवते)

यज्ञश्च रोचनश्चैव सत्यजित्त्रिशिखस्तथा ।
विभुर्मन्द्रद्युम्न इति पुरन्दरबली तथा ।। 98

अद्भुतश्शम्भुविधृतौ ऋतुधामा दिवस्पतिः ।
शुचिश्चेति समाख्याताः इन्द्रा मन्वन्तरेषु वै ।। 99

## अथ स्वायंभुवादिचतुर्दशमनूनां हरिनामानि

**(भागवते)**

यज्ञो विभुस्सत्यसेनो हरिर्वैकुण्ठ एव च ।
अजितो वामनस्सार्वभौमो ऋषभ एव च ।। 100

विष्वक्सेनो धर्मसेतुः स्वाधामा च ततः परम् ।
योगीश्वरोऽपहर्ता च मनूनां हरयः स्मृताः ।। 101

136B/1

## अथ पर्जन्यध्यानम्

**(शैवागमे)**

पर्जन्यनामा विज्ञेयो गजवक्त्रत्रयान्वितः ।
यो धत्ते सर्वजीवानां वरं जीवं च शोषकम् ।। 102

कुठारं च पयोजं च चिन्तारत्नं महाशुचिः ।
पाशं चक्रं किसलयं कुण्डिकां दशभिः करैः ।। 103

**(श्वेतवर्णः)**

136B/2

## अथ ब्रह्मास्त्रध्यानम्

**(तत्कल्पे)**

सव्येनारीन्पीडयन्तं गदया चोत्तरेण तु ।
दीर्घजिह्वं पीतवस्त्रं स्मरामि बगळामुखम् ।। 104

**(पीतवर्णः)**

136B/3

## अथ कामधेनुध्यानम्

**(नृसिंहप्रासादे)**

सुरभिर्गोमुखी गौरी स्त्रीरूपा सर्वभूषणा ।
घासमुष्टिं तथा कुण्डीं बिभ्राणा भूतिपुष्टिदा ।। 105

**(गौरवर्णः)**

136B/4 **अथ प्रकारान्तरकामधेनुध्यानम्**

**(प्रपञ्चसारे)**

नारीरूपमुखं चैव हयग्रीवोर्ध्वकर्णकम् ।
त्रिणेत्रं च त्रिशृङ्गं च हंसपक्षं द्विपुच्छकम् ।। **106**

ललाटभागे लक्ष्यं च मयूरं पुच्छसम्भवम् ।
पञ्चस्तनं च गोपादं कामधेनुस्वरूपकम् ।। **107**

**(कनकवर्णः प्रसिद्धः)**

137A **अथ नवचिरञ्जीविनां ध्यानम्**

**(शैवागमे, वर्णनामानि पाद्मे)**

अश्वत्थामा श्वेतवर्णः कालवर्णो महाबलिः ।
व्यासः कृष्णो मारुतिस्तु स्फटिकाभः प्रकीर्तितः ।। **108**

विभीषणः कृष्णवर्णो कृपस्तु धवलः स्मृतः ।
जामदग्न्यः सुवर्णाभो मार्कण्डेयस्सितस्स्मृतः ।। **109**

प्रह्लादस्तु सुवर्णाभो वर्णा एषां प्रकीर्तिताः ।। **109A**

137A/1 **तत्र अश्वत्थामध्यानम्**

**(शैवागमे)**

ब्रह्मसूत्रोज्ज्वलभुजो राजकृष्णाजिनाम्बरः ।
अश्वत्थामा चिरञ्जीवी दीर्घमायुर्ददातु मे ।। **110**

**(श्वेतवर्णः)**

137A/2

## अथ बलिध्यानम्

(शैवागमे)

बलिः पातालनिलयो धनुर्बाणधरो नृपः ।
विष्णुपादाङ्कितशिराः चिरञ्जीवी प्रसीदतु ।। 111

(कृष्णवर्णः)

पत्नी विन्ध्यावली ।

137A/3

## अथ व्यासध्यानम्

(शैवागमे)

व्यासः समस्तधर्माणां वक्ता मुनिवरेडितः ।
चिरञ्जीवी दीर्घमायुः ददातु जटिलो मम ।। 112

(कृष्णवर्णः)

137A/4

## अथ हनुमद्ध्यानम्

(शैवागमे)

हनूमान् रामपादाब्जसङ्गी वर्णी वरः शुचिः ।
सञ्जीवनापहर्ता मे दीर्घमायुर्ददात्विह ।। 113

(स्फटिकवर्णः)

137A/5

## अथ विभीषणध्यानम्

(शैवागमे)

विभीषणो धर्मपरो रामार्चनपरायणः ।
ददातु चिरजीवत्त्वं चिरञ्जीवी जितेन्द्रियः ।। 114

(कृष्णवर्णः)

पत्नी सरमा ।

137A/6

## अथ कृपध्यानम्

(शैवागमे)

कृपः कृपापयोराशिः तपस्वी चीरवस्त्रधृक् ।
वितनोतु प्रसन्नात्मा यावज्जीवमरोगताम् ।। 115

(श्वेतवर्णः)

137B/1

## अथ परशुरामध्यानम्

(शैवागमे)

परशूज्ज्वलहस्ताब्जो जपामण्डलमण्डितः ।
ददातु चिरजीवित्वं प्रसन्नात्मा भृगूद्वहः ।। 116

(स्वर्णवर्णः)

137B/2

## अथ प्रह्लादध्यानम्

(शैवागमे)

विष्णुभक्तं महाप्राज्ञं द्विभुजं राक्षसोत्तमम् ।
ध्यायाम्यहं महासौम्यं प्रह्लादं चिरजीविनम् ।। 117

(स्वर्णवर्णः)

137B/3

## अथ मार्कण्डेयध्यानम्

(शैवागमे)

श्रीमन्तं शान्तमनसं शिवपूजापरायणम् ।
वेदशास्त्रार्थतत्त्वज्ञं मार्कण्डेयमहं भजे ।। 118

(शुभ्रवर्णः)

## अथ अष्टवसूनां वर्णः लक्षणं च

**(कारणागमे)**

ध्रुवः पीतोऽध्वरश्श्यामः सितस्सोमोऽनिलो हरित् ।
आपः सिता इति प्रोक्ता ह्यनलो लोहितस्स्मृतः ।। 119

प्रत्यूषश्श्वेतभास्तद्वत् प्रभासश्श्वेतवर्णकः ।
प्रसन्नवदनास्सौम्याः वरदाश्शक्तिपाणयः ।। 120

पद्मासनस्था द्विभुजाः कर्तव्या वसवस्सदा । 120A

एतेषामष्टवसूनाम् उपर्युक्तश्लोकरीत्या एकाकारत्वात्, शैवागमरीत्या भिन्नाकारस्य उक्तत्वाच्च तदनुसारेण प्रतिमाः कारणागमरीत्या वर्णाः लिखिताः ।

137B/4

## तत्र ध्रुववसुध्यानम्

**(शैवागमे)**

अक्षमालाधरं ब्रह्मसूत्रोज्ज्वलभुजान्तरम् ।
ध्रुवं ध्रुवाय यशसे चिन्तयामि सदा मुदा ।। 121

**(पीतवर्णः)**

137B/5

## अथ अध्वरवसुध्यानम्

**(शैवागमे)**

स्रुक्स्रुवाञ्चत्करव्याघ्रचर्माम्बरधरं शुचिम् ।
अग्निशुश्रूषणरतमध्वरं वसुमन्वहम् ।। 122

**(श्यामवर्णः)**

138A/1

### अथ सोमवसुध्यानम्

(शैवागमे)

जगदानन्दजनकममृतस्राविचक्षुषम् ।
रत्नसिंहासनगतं सोमं हृदि विभावये ।। 123

(शुभ्रवर्णः)

138A/2

### अथ आपवसुध्यानम्

(शैवागमे)

सर्वपापविनाशिन्यः सामुद्रा हेमपूरिताः ।
आपः शुभप्रदास्सन्तु मत्स्यवाहनसङ्गताः ।। 124

(श्वेतवर्णः)

138A/3

### अथ अनिलवसुध्यानम्

(शैवागमे)

शुभाय मे सदा भूयात् अनिलो लोकपावनः ।
समस्तदेवनिवहवन्द्यमानपदाम्बुजः ।। 125

(हरिद्वर्णः)

138A/4

### अथ अनलवसुध्यानम्

(शैवागमे)

अजाधिरूढं शुभदं स्वाहादेवीसमन्वितम् ।
किरीटोज्ज्वलमूर्धानम् अनलं भावयाम्यहम् ।। 126

(लोहितवर्णः)

138A/5

## अथ प्रत्यूषवसुध्यानम्

(शैवागमे)

श्वेतवस्त्रधरं श्वेतं चन्दनालिप्तदेहकम् ।
प्रत्यूषं चिन्तये भूयः प्रत्यूहोन्मूलकारणम् ।। 127

(श्वेतवर्णः)

138A/6

## अथ प्रभासवसुध्यानम्

(शैवागमे)

प्रभासम्पूर्णवपुषं प्रभासं भावयाम्यहम् ।
अक्षसूत्रोज्ज्वलकरं व्याघ्राजिननिवासिनम् ।। 128

(शुभ्रवर्णः)

138B

## अथ सप्तमरुतां स्वरूपाणि

(शैवागमे वर्णस्तु पाद्मे कारणागमे च)

शिष्टलक्षणादिकं दिक्पालवायुवत् ।

ग्रन्थान्तरे मयूखे खड्गचर्मधरा नित्यमिति । एतेषां नामानि शैवागमे । एते समष्टिमरुतः ।

आवहो विवहश्चैव उद्वहस्संवहस्तथा ।
निवहोऽनुवहश्चैव प्रवहस्तु तथैव च ।।
सप्तैते मरुतः प्रोक्ताः सप्तसप्तप्रभेदतः ।

एतेषां वर्णः पाद्मे कारणागमे च -

धूम्रो रक्तस्तथा पीतः श्यामश्श्वेतोऽसितोऽरुणः ।
वर्णोऽयं मरुतामुक्तः सप्तानामनुपूर्वशः ।।

138B/1

## तत्र आवहमरुद्ध्यानम्

(शैवागमे)

आवहो मरुतां श्रेष्ठः सुखायास्तु सदा मम ।
आसमन्तात्सञ्चरिष्णुः सुतीव्रगरुडस्थितः ।। 129

(धूम्रवर्णः)

138B/2

## अथ विवहमरुद्ध्यानम्

(शैवागमे)

जगतां भञ्जनं कुर्वन् विपरीतप्रधावनैः ।
नभोमध्यगतो वायुः विवहो भूतिदोऽस्तु मे ।। 130

(रक्तवर्णः)

138B/3

## अथ उद्वहमरुद्ध्यानम्

(शैवागमे)

उद्वेलयन् पयोराशीन् गिरीनुन्मूलयंस्तरून् ।
जगतीं क्षोभयन् नित्यमुद्वहस्सेव्यते मया ।। 131

(पीतवर्णः)

138B/4

## अथ संवहमरुद्ध्यानम्

(शैवागमे)

जगदानन्दजनको गन्धहारी शनैश्शनैः ।
शीताम्बुकणसंवाहस्संवहस्सुखदोऽस्तु मे ।। 132

(श्यामवर्णः)

138B/5

## अथ निवहमरुद्ध्यानम्

(शैवागमे)

प्रचण्डगतिनिर्धूतप्रपलायितपर्वतम् ।
निवहं पवनश्रेष्ठं शिरसा प्रणमाम्यहम् ।। 133

(श्वेतवर्णः)

138B/6

## अथ अनुवहमरुद्ध्यानम्

(शैवागमे)

प्रातिकूल्येन धावन्तं भ्रामयन्तं जगत्त्रयम् ।
मरुतां प्रवरं नित्यमाश्रयेऽनुवहाभिधम् ।। 134

(कृष्णवर्णः)

138B/7

## अथ प्रवहमरुद्ध्यानम्

(शैवागमे)

प्राणापानादिरूपेण जगतीं व्याप्य जीवयन् ।
सेव्यतां प्राणिनिवहैः मरुत्प्रवहसंज्ञकः ।। 135

(अरुणवर्णः)

139A

## अथ एकोनपञ्चाशन्मरुन्नामानि

(कारणागमे)

एतेषां स्वरूपं मयूखे - प्राणः, अपानः, व्यानः, उदानः, समानः, नागः, कृकरः, कूर्मः, देवदत्तः, धनञ्जयः, प्रवहः, विवहः, शम्भुः, संवहः, अनुवहः, उर्वहः, आवहः, शङ्खुः, कालः, निवहः, श्वासः, अनिलः, अनलः, प्रतिभा, कुमुदः, कान्तः, सिबिः, श्वेतः, रक्तः, कृष्णः, जितः, अजितः, जञ्झा, द्योतः, क्रतुः, सिद्धः, पिङ्गः, शुचिः, सौम्यः, मारुतः, हनुः, कम्पनः, मण्डूकः, भीमः, कपिः, संवर्तकः, जडः, अतिजडः, सन्ततः ।। ४९ ।।

139A/1

## एतेषां स्वरूपम्

(मयूखे)

भ्रातरः पुरुहूतस्य मरुतः सूर्यवर्चसः ।
किरीटहारकेयूरकटकादिविभूषिताः ।। 136

खड्गचर्मधरा नित्यं शक्रस्यानुचरास्सदा ।
एतेषां वर्णरूपाणि मुख्यानां मरुतां यथा ।। 137

एतेषां एकोनपञ्चाशतां प्रतिमानां रूपमेकप्रकारमेव । अतः लक्षणार्थम् एकैव प्रतिमा लिखिता। मुख्यमरुतां वर्ण इव (सप्तशो) गणना - धूम्रः ७, रक्तः ७, पीतः ७, श्यामः ७, कृष्णः ७, अरुणः ७ इति एकोनपञ्चाशतः । एते व्यष्टिमरुतः।

139A/2

## अथ विश्वेदेवानां नामानि

(स्मार्तप्रयोगे)

## एतेषां स्वरूपम्

(भट्टभास्करीये)

तत्र नामानि -

क्रतुर्दक्षो वसुस्सत्यः कालः कामो धनुस्तथा ।
पुरूरवाश्च रुद्रश्च रुचिकश्चार्द्रवास्तथा ।। 138

धनुर्विलोचनश्चेति त्रयोदशविधस्तथा ।
विश्वेदेवोऽपि च स्मार्तप्रयोगे परिकीर्तितः ।। 139

## अथ एतेषां स्वरूपम्

(भट्टभास्करीये)

विश्वेदेवाश्च सर्वेऽपि दक्षिणे बाणपाणयः ।
कर्तव्या वामपाणौ तु शरासनधरास्सिताः ।। 140

## प्रकारान्तरदशविश्वेदेवानां नामानि

**(भट्टभास्करीये)**

क्रतुर्दक्षो वसुस्सत्यः कालः कामो विलोचनः ।
पुरूरवार्द्रवौ रुद्रो विश्वेदेवा दश स्मृताः ।। **141**

उपर्युक्तश्लोकरीत्या त्रयोदशविश्वेदेवाः समानरूपाः । अत एकैव प्रतिमा लिखिता। प्रकारान्तरेण विश्वेदेवाः इति कृत्वा ग्रन्थान्तररीत्या श्लोकोऽपि लिखितोऽस्ति ।

**(श्वेतवर्णः)**

139B/1

## अथ अष्टदिक्पालकानां ध्यानम्

**(भट्टभास्करीये शिङ्गाभट्टीयप्रयोगे शैवागमे नृसिंहप्रासादे मयूखे दानखण्डे च)**

### तत्र इन्द्रध्यानम्

**(भट्टभास्करीये)**

इन्द्रं सहस्रनेत्रं च पीतवर्णं चतुर्भुजम् ।
अभयं दक्षिणे हस्ते वरदं वामहस्तके ।। **142**

कुलिशं दक्षिणे हस्ते ह्यङ्कुशं च तथेतरे ।
रत्नकौस्तुभमाणिक्यदिव्याभरणभूषितम् ।। **143**

कुण्डलं यज्ञसूत्रं च दधानं दिव्यतेजसम् ।
ऐरावतगजारूढं शचीकान्तं नमाम्यहम् ।। **144**

**(हेमवर्णः)**

139B/2

## अथ अग्निध्यानम्

**(शिङ्गाभट्टीयप्रयोगे)**

सप्तहस्तश्चतुःशृङ्गः सप्तजिह्वो द्विशीर्षकः ।
त्रिपात्प्रसन्नवदनः सुखासीनश्शुचिस्मितः ।। **145**

स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा ।
बिभ्रद्दक्षिणहस्तैस्तु शक्तिमन्नं स्रुचं स्रुवम् ।। **146**

तोमरं व्यजनं वामैः घृतपात्रं तु धारयन् ।
मेषारूढं जटाबद्धं गौरवर्णं महौजसम् ।। **147**

धूमध्वजं लोहिताक्षं सप्तार्चिस्सर्वकामदम् ।
आत्माभिमुखमासीनम् एवं ध्यायेद्धुताशनम् ।। **148**

**(रक्तवर्णः औचित्यात्)**

**139B/3**

## अथ यमध्यानम्

**(शैवागमे नृसिंहप्रासादे च)**

करालमहिषारूढं कालदण्डधरं तथा ।
श्यामवर्णं पाशहस्तं कृतान्तं प्रणमाम्यहम् ।। 149

इलाप्रियो दण्डधरो यमो महिषवाहनः ।
रक्तवर्णो हि लोकानां स्वस्वकर्मफलप्रदः ।। 150

**(जनानां पापपुण्यवशात् श्यामरक्तवर्णौ)**

**139B/4**

## अथ निर्ऋतिध्यानम्

**(मयूखे दानखण्डे)**

खड्गचर्मधरो नीलो निर्ऋतिर्नरवाहनः ।
ऊर्ध्वकेशो विरूपाक्षः करालः कालिकाप्रियः ।। 151

**(नीलवर्णः)**

140A/1

## अथ वरुणध्यानम्

(मयूखे भट्टभास्करीये)

नागपाशधरो रत्नभूषणः पद्मिनीप्रियः ।
वरुणोऽम्बुपतिस्स्वर्णवर्णो मकरवाहनः ।। 152

(स्वर्णवर्णः)

140A/2

## अथ वायुध्यानम्

(भट्टभास्करीये मयूखे)

प्राणबन्धुर्हि जगतो वायुः कृष्णमृगासनः ।
हेमदण्डध्वजश्श्यामो वर्णतो मोहिनीप्रियः ।। 153

(श्यामवर्णः)

140A/3

## अथ कुबेरध्यानम्

(मयूखे भट्टभास्करीये)

अश्वारूढः कुन्तपाणिः कुबेरश्चित्तिनीप्रियः ।
निधीश्वरस्स्वर्णवर्णो धनदो रूपवान्प्रभुः ।। 154

(स्वर्णवर्णः)

140A/4

## अथ ईशानध्यानम्

(मयूखे भट्टभास्करीये)

शुद्धस्फटिकसङ्काशो गौरीशो वृषवाहनः ।
वरदाभयशूलाक्षसूत्रधृत्परमेश्वरः ।। 155

(श्वेतवर्णः)

140B

## अथ अष्टदिग्गजस्वरूपाणि

(मयूखे)

## दिग्गजनामानि, दिग्गजपत्नीनां नामानि च

(आग्नेयपुराणे)

### तत्र दिग्गजानां स्वरूपाणि

(मयूखे)

शुभ्राभश्च चतुर्दन्तः श्रीमानैरावतो गजः ।
पुष्पदन्तो बृहच्छ्यामः षड्दन्तः पुष्पदन्तवान् ।। 156
सामान्यं गजरूपेण शेषा दिक्करिणस्स्मृताः ।। 156A

### दिग्गजनामानि

(आग्नेये)

ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ।
पुष्पदन्तः सार्वभौमः सुप्रतीकोऽष्टदिग्गजाः ।। 157

### दिग्गजपत्नीनां नामानि

(आग्नेयपुराणे)

करिण्योऽभ्रमुः कपिला पिङ्गलानुपमाः क्रमात् ।
ताम्रपर्णी सुदन्ती स्यात् अञ्जना चाञ्जनवती ।। 158

140B/1 इन्द्रदिग्गजः ऐरावतः शुभ्रवर्णः चतुर्दन्तः, पत्नीनाम अभ्रमुः ।

140B/2 अग्निदिग्गजः पुण्डरीकः, धूम्रवर्णः, पत्नी कपिला ।

140B/3 यमदिग्गजः वामनः, धूम्रवर्णः, पत्नी पिङ्गला ।

140B/4 निर्ऋतिदिग्गजः कुमुदः, धूम्रवर्णः, पत्नी अनुपमा ।

140B/5 वरुणदिग्गजः अञ्जनः, धूम्रवर्णः, पत्नी ताम्रपर्णी ।

140B/6 वायव्यदिग्गजः पुष्पदन्तः नीलवर्णः षड्दन्तः पत्नी सुदन्ती ।

140B/7 कुबेरदिग्गजः सार्वभौमः, धूम्रवर्णः, पत्नी अञ्जना ।

140B/8 ईशानदिग्गजः सुप्रतीकः, धूम्रवर्णः, पत्नी अञ्जनावती ।

## अथ अष्टदिङ्नागानां नामानि स्वरूपाणि च

### (नृसिंहप्रासादे)

अनन्तो वासुकिश्चैव तक्षःकर्कोटपद्मकाः ।
महापद्मश्च शङ्खश्च कुलिकोऽष्टौ कुलानि हि ।। **159**

### एतेषां स्वरूपाणि

अनन्तकुलिकौ विप्रौ श्वेतवर्णावुदाहृतौ ।
प्रत्येकं तु सहस्रेण फणानां समलङ्कृतौ ।। **160**

वासुकिश्शङ्खपालश्च क्षत्रियौ रक्तवर्णकौ ।
प्रत्येकं तु फणास्सप्तशतसङ्ख्याविराजितौ ।। **161**

तक्षकश्च महापद्मो वैश्यजातावुदाहृतौ ।
पीतवर्णौ फणैः पञ्चशततुङ्गोत्तमाङ्गकौ ।। **162**

पद्मकर्कोटकौ शूद्रौ नीलवर्णावुदाहृतौ ।
फणा त्रिशतकौ ज्ञेयौ विख्याताविति तत्त्वतः ।। **163**

141A/1 इन्द्रदिङ्नागः अनन्तः ब्रह्मजातिः फणाः १००० श्वेतवर्णः ।

141A/2 आग्नेयदिङ्नागः वासुकिः क्षत्रियजातिः फणाः ७०० रक्तवर्णः ।

141A/3 यमदिङ्नागः तक्षकः वैश्यजातिः फणाः ५०० पीतवर्णः ।

141A/4 निर्ऋतिदिङ्नागः कार्कोटकः शूद्रजातिः फणाः ३०० नीलवर्णः ।

141A/5 वरुणदिङ्नागः पद्मकः शूद्रजातिः फणाः ३०० नीलवर्णः ।

141A/6 वायव्यदिङ्नागः महापद्मः वैश्यजातिः फणाः ५०० पीतवर्णः ।

141A/7 कुबेरदिङ्नागः शङ्खपालः क्षत्रियजातिः फणाः ७०० रक्तवर्णः ।

141A/8 ईशानदिङ्नागः कुलिकः ब्रह्मजातिः फणाः १००० श्वेतवर्णः ।

141B/1 **अथ त्रिमुखाग्निध्यानम्**

**(मन्त्रदेवताप्रकाशिकायाम्)**

आर्यावृत्तम् -

शक्तिस्वस्तिकपाशांकुशवराभयान् दधत्त्रिमुखः ।
मकुटादिविविधभूषोऽवताच्चिरं पावकः प्रसन्नो वः ।। 164

**(दिक्पालाग्निवद्रक्तवर्णः)**

141B/2 **अथ ऊर्ध्वदिगधिपतिब्रह्मध्यानम्**

**(हेमाद्रौ दानखण्डे)**

पद्मयोनिस्त्रयीमूर्तिः वेदावासः पितामहः ।
यज्ञदक्षश्चतुर्वक्त्रः स मे नित्यं प्रसीदतु ।। 165

**(औचित्यात् पाटलवर्णः)**

141B/3 **अथ अधोदिगधिपत्यनन्तमूर्तिध्यानम्**

**(हेमाद्रौ दानखण्डे)**

योऽसावनन्तरूपेण ब्रह्माण्डं सचराचरम् ।
पुष्पवद्धारयेन्मूर्ध्नि तस्मै नित्यं नमो नमः ।। 166

**(औचित्यात् श्वेतवर्णः)**

141B/4 **अथ दशदिक्स्वरूपम्**

**(नृसिंहप्रासादे)**

**तत्र पूर्वदिक्स्वरूपम्**

पूर्वा गजगता बाला रक्तवर्णादिदिग्भवेत् ।

**(रक्तवर्णः)**

141B/5 **अथ आग्नेयदिक्स्वरूपम्**

**(नृसिंहप्रासादे)**

कारण्डगा बृहत्काया पद्माभा पूर्वदक्षिणा ।। **167**

**(पद्मवर्णः)**

142A/1 **अथ दक्षिणदिक्स्वरूपम्**

**(नृसिंहप्रासादे)**

गृध्रस्था दक्षिणा पीता गृध्रास्या प्राप्तयौवना ।

**(पीतवर्णः)**

142A/2 **अथ निर्ऋतिदिक्स्वरूपम्**

**(नृसिंहप्रासादे)**

उष्ट्रगा कृष्णपीता च तरुणी याम्यपश्चिमा ।। **168**

**(हरिद्वर्णः)**

142A/3 **अथ पश्चिमदिक्स्वरूपम्**

**(नृसिंहप्रासादे)**

युवती द्विभुजा कृष्णा पश्चिमा तुरगस्थिता ।

**(कृष्णवर्णः)**

142A/4 **अथ वायव्यदिक्स्वरूपम्**

**(नृसिंहप्रासादे)**

आसनंपतिका नीला धनुर्वादनतत्परा ।। **169**

**(नीलवर्णः)**

142A/5

## अथ उत्तरदिक्स्वरूपम्

(नृसिंहप्रासादे)

श्वेतानना तथा रक्ता वृद्धा भवति चोत्तरा ।

(रक्तवर्णः शरीरे, श्वेतवर्णो मुखे)

142A/6

## अथ ईशान्यदिक्स्वरूपम्

(नृसिंहप्रासादे)

अतिवृद्धा वृषस्था च शुक्ला पूर्वोत्तरा भवेत् ।। 170

(श्वेतवर्णः)

142B/1

## अथ ऊर्ध्वदिक्स्वरूपम्

(शैवागमे)

ऊर्ध्वा गगनसन्निभा । नीलवर्णः । एतत्स्वरूपं पञ्चभूतस्थाकाशवत् ।

ध्यायामि गगनं नीलं नीलाम्बरधरं विभुम् ।<br>चन्द्रार्कहस्तं द्विभुजं सर्वाभरणभूषितम् ।। 171

(नीलवर्णः)

अस्य षोडशवार्षिकमिति विशेषणमस्ति हेमाद्रौ दानखण्डे ।

142B/2

## अथ अधोदिक्स्वरूपम्

(शैवागमे)

अधस्स्था पृथिवी साम्या । श्वेतवर्णः । एतत्स्वरूपं पञ्चभूतस्थपृथिवीवत् ।

ध्यायेन्महीं शुक्लवर्णां दिव्याभरणभूषिताम् ।<br>चतुर्भुजां सौम्यतनुं चण्डांशुसदृशाम्बराम् ।। 172

अधश्चोर्ध्वं रत्नपात्रं कराभ्यां सस्यभाजनम् ।<br>दक्षिणाभ्यां तथा वामकराभ्यां सरसीरुहम् ।। 173

ओषधीपूरितं पात्रं दधानां सुमुखाम्बुजाम् ।
दिङ्नागानां चतुर्णां च पृष्ठारूढां रसात्मिकाम् ।। 174
सर्वसस्यालयां शुभ्रां भूदेवीं शरणं भजे ।

(शुक्लवर्णः)

142B/3

## अथ अश्विनीदेवताध्यानम्

(शैवागमे)

उभयौ सोपवीतौ तौ चूडामकुटधारिणौ ।। 175
फुल्लरक्तोत्पलाक्षौ च पीतस्रग्वस्त्रवर्णकौ ।
नासत्यदस्रनामानौ अश्विनौ भिषजौ स्मृतौ ।। 176

(पीतवर्णः)

## प्रकारान्तरध्यानम्

(शैवागमे)

अश्विनौ देवते श्वेतवर्णौ तौ द्विभुजौ स्तुमः ।
सुधासम्पूर्णकलशकराब्जावश्ववाहनौ ।। 177

142B/4

## अथ प्रकारान्तराश्विनीदेवताध्यानम्

(वैद्यशास्त्रे आयुर्वेदतन्त्रे)

अश्विनोराकृतिं वक्ष्ये सर्वलक्षणमण्डिताम् ।
पादादिकण्ठपर्यन्तमश्वरूपं प्रकल्पयेत् ।। 178
वक्त्रे नराकृतिः प्रोक्ता द्विनेत्रौ मकुटान्वितौ ।
श्रोत्रद्वयौ स्थूलकण्ठौ चतुर्बाहुसमन्वितौ ।। 179
अश्वपादद्वयोपेतौ सव्ये चाभयमोषधिम् ।
करण्डं चामृतघटं वामहस्ते च बिभ्रतः ।। 180

नवतालेन कर्तव्यौ अश्विनौ भिषजौ स्मृतौ ।
देवानां दस्रनासत्यनाम्नोक्तौ श्वेतरूपिणौ ।। 181

(श्वेतवर्णः)

143A/1

**अथ सप्तसमुद्रमूर्तिध्यानम्**

**(नृसिंहप्रासादे)**

**तत्र लवणसमुद्रध्यानम्**

**(नृसिंहप्रासादे)**

लवणोदः प्रकर्तव्यो द्विभुजो रत्नभूषणः ।
दक्षेऽक्षमालिकां वामे पात्रं च बहुरत्नभृत् ।। 182
सोत्तरीयोपवीती च पाटलाभस्सुखासनः । 182A

(पाटलवर्णः)

143A/2

**अथ इक्षुसमुद्रध्यानम्**

**(नृसिंहप्रासादे)**

समुद्रमिक्षुकाण्डं च गोमूत्रसदृशच्छविम् ।
घटं दण्डं च बिभ्राणं देवं हृदि विभावये ।। 183

(गोमूत्रवर्णः)

143A/3

**अथ सुरासमुद्रध्यानम्**

**(नृसिंहप्रासादे)**

सुरोदं गण्डकारूढं गोमेदस्सदृशच्छविम् ।
मुद्गरं कुण्डिकां चैव बिभ्राणं हृदि भावये ।। 184

(गोमेदोवर्णः)

गण्डको नाम मत्स्यविशेषः ।

143A/4

### अथ सर्पिस्समुद्रध्यानम्

**(नृसिंहप्रासादे)**

घृतोदः कपिलो ज्ञेयः कुलीरस्थो जटाधरः ।
कशेरुपूरितं पात्रं घटं बिभ्रद्विदोरथ ।। 185

**(कपिलवर्णः)**

143A/5

### अथ दधिसमुद्रध्यानम्

**(नृसिंहप्रासादे)**

दधिमण्डोद एवात्र शुभ्रोऽयं वारिदासनः ।
दण्डशक्तिं च बिभ्राणो द्विभुजोऽसौ जटायुतः ।। 186

**(शुभ्रवर्णः)**

143A/6

### अथ क्षीरसमुद्रध्यानम्

**(नृसिंहप्रासादे)**

क्षीरोदश्श्वेतवर्णश्च द्विभुजो रत्नकुण्डलः ।
मकरस्थोऽम्बुजं दक्षे वामे कलशमादधत् ।। 187

**(श्वेतवर्णः)**

143A/7

### अथ शुद्धोदकसमुद्रध्यानम्

**(नृसिंहप्रासादे)**

स्वादूदो मौक्तिकाभासो द्विभुजो रत्नकुण्डलः ।
मकरस्थोऽम्बुजं दक्षे वामे कलशमादधत् ।। 188

**(मौक्तिकवर्णः)**

143B/1

## अथ पञ्चभूतस्वरूपाणि

(शैवागमे)

### तत्र पृथ्वीदेवतास्वरूपम्

(शैवागमे)

ध्यायेन्महीं शुक्लवर्णां दिव्याभरणभूषिताम् ।
चतुर्भुजां सौम्यतनुं चण्डांशुसदृशाम्बराम् ।। 189

अधश्चोर्ध्वं रत्नपात्रं कराभ्यां सस्यभाजनम् ।
दक्षिणाभ्यां तथा वामकराभ्यां सरसीरुहम् ।। 190

ओषधीपूरितं पात्रं दधानां सुमुखाम्बुजाम् ।
दिङ्नागानां चतुर्णां च पृष्ठारूढां रसात्मिकाम् ।। 191

सर्वसस्यालयां शुभ्रां भूदेवीं शरणं भजे । 191A

(शुभ्रवर्णः)

143B/2

### अथ अब्देवतास्वरूपम्

(शैवागमे)

आदर्शतलसङ्काशा लोकसञ्जीविनीश्शुभाः ।
माधुर्यगुणसंयुक्ताः सर्वालङ्कारशोभिताः ।। 192

स्त्रीरूपधारिणीश्शुभ्राः भुजद्वयविराजिताः ।
दधानाः पाशकलशौ सदा मकरवाहनाः ।। 193

मुक्ताभूषितसर्वाङ्गीरपः सञ्चिन्तयेन्मुदा । 193A

(शुभ्रवर्णः)

143B/3

## अथ तेजोदेवतास्वरूपम्

**(शैवागमे)**

अग्निं सुवर्णवर्णाङ्गं सप्तार्चिषमनामयम् ।
मेषारूढं सप्तहस्तं स्वाहादेवीसमन्वितम् ।। **194**

शक्त्याद्यायुधसम्पन्नहस्तं ध्यायेद्विभावसुम् । **194A**

**(कनकवर्णः)**

143B/4

## अथ वायुदेवतास्वरूपम्

**(शैवागमे)**

धावद्धरिणमारूढं द्विभुजं ध्वजधारिणम् ।
वरदानकरं धूम्रवर्णं वायुमहं भजे ।। **195**

**(धूम्रवर्णः)**

143B/5

## अथ आकाशदेवतास्वरूपम्

**(शैवागमे)**

ध्यायामि गगनं नीलं नीलाम्बरधरं विभुम् ।
चन्द्रार्कहस्तं द्विभुजं सर्वाभरणभूषितम् ।। **196**

**(नीलवर्णः)**

अस्य षोडशवार्षिकमिति विशेषणमस्ति हेमाद्रौ दानखण्डे ।

144A

## अथ धर्मादिचतुष्टयनामवर्णस्वरूपाणि

**(नृसिंहप्रासादे)**

धर्मो ज्ञानं च वैराग्यमैश्वर्यं च तथैव हि ।
सितारुणाः पीतकृष्णाः सिंहरूपाः प्रकीर्तिताः ।। **197**

## अथ धर्माद्यभिमानिचतुष्टयदेवताध्यानम्

(पाञ्चरात्रे)

यमवायुशिवेन्द्राश्च ज्ञेया धर्माधिदेवताः ।। 197A

एतेषां लक्षणानि दिक्पालेषु द्रष्टव्यानि ।

144A/1 वैराग्याभिमानिदेवता शिवः । श्वेतवर्णः । दिक्पालेशानवत् ।

144A/2 वैराग्यस्वरूपं, पीतवर्णः ।

144A/3 ऐश्वर्याभिमानिदेवता इन्द्रः । हेमवर्णः । दिक्पालेन्द्रवत् ।

144A/4 ऐश्वर्यस्वरूपं कृष्णवर्णः ।

144A/5 धर्माभिमानिदेवता यमः । श्यामवर्णः । दिक्पालयमवत् ।

144A/6 धर्मस्वरूपं श्वेतवर्णः ।

144A/7 ज्ञानाभिमानिदेवता वायव्यः । धूम्रवर्णः । दिक्पालवायव्यवत् ।

144A/8 ज्ञानस्वरूपं रक्तवर्णः ।

144A/9

## अथ पुण्यपुरुषलक्षणम्

(कारणागमे)

सिंहासने समासीनं स्वर्णवर्णं किरीटिनम् ।
गीर्वाणनुतपादाब्जं पुण्यं हृदि विभावये ।। 198

(स्वर्णवर्णः)

144B

## अथ अधर्मादिचतुष्टयध्यानम् एतदभिमानिचतुष्टयदेवताध्यानम्

(पाञ्चरात्रे पाद्मसंहितायाम्)

### तत्र अधर्मादिचतुष्टयध्यानम्

आशासु तावतीष्वेव पुरुषाकृतयः स्थिताः ।
चतुर्भुजाः सिंहवक्त्रास्सिताः पूर्वेऽरुणाः परे ।। 199

हस्ताभ्याममभिमुख्याभ्यां रचिताञ्जलिसम्पुटाः ।
अपराभ्यां च बिभ्राणाः कराभ्यां योगपीठिकाम् ।। 200

**(मुखे श्वेतवर्णः, शरीरे अरुणवर्णः)**

अथ एतदभिमानिदेवताध्यानम् । अधर्माधिपतिः निर्ऋतिः । अज्ञानाधिपति- र्दुर्गा । अवैराग्याधिपतिः कामः । अनैश्वर्याधिपती रुद्रः ।

अपूजिता अधर्माद्या दातारस्ते तथाविधाः ।
निर्ऋतिश्चैव दुर्गा च कामो रुद्रस्तथैव च ।। 201

एतेषां स्वरूपाणि तत्तन्मूर्तिलक्षणे उक्तानि । रुद्रः आर्द्रानक्षत्रदेवतावत् । दुर्गा रौद्रीसंवत्सरदेवतावत् ।

144B/1 अनैश्वर्याभिमानिदेवता रुद्रः, श्वेतवर्णः, आर्द्रानक्षत्रदेवतावत् ।

144B/2 अनैश्वर्यस्वरूपं, कृष्णवर्णः ।

144B/3 अज्ञानाभिमानिदेवता दुर्गा, नीलवर्णः, रौद्रीसंवत्सरदेवतावत् ।

144B/4 अज्ञानस्वरूपं, रक्तवर्णः ।

144B/5 अवैराग्याभिमानिदेवता कामः । कनकवर्णः ।

144B/6 अवैराग्यस्वरूपं, पीतवर्णः ।

144B/7 अधर्माभिमानिदेवता निर्ऋतिः, नीलवर्णः ।

144B/8 अधर्मस्वरूपं, श्वेतवर्णः ।

144B/9

## अथ पापपुरुषलक्षणम्

**(पाञ्चरात्रे)**

ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् ।
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ।। 202

तत्संयोगिपदद्वन्द्वम् अङ्गप्रत्यङ्गपातकम् ।
उपपातकरोमाणं पिङ्गभ्रूश्मश्रुलोचनम् ।। 203

खड्गचर्मधरं क्लृप्तं कुक्षौ वामे विचिन्तयेत् । 203A

(कृष्णवर्णः)

145A

## अथ वेदचतुष्टयध्यानम्

(नृसिंहप्रासादे)

एतत्पत्नीनां ध्यानं स्कान्दे लक्ष्मीनारायणसंवादे । एतदभिमानिदेवतानां ध्यानं हेमाद्रौ दानखण्डे ।

145A/1

## तत्र ऋग्वेदस्वरूपम्

(नृसिंहप्रासादे)

ऋग्वेदः श्वेतवर्णः स्यात् द्विभुजो रासभाननः ।
अक्षमालाधरः सौम्यः प्रीतो व्याख्यापनोद्यतः ।। 204

(श्वेतवर्णः)

## अस्य पत्नी सामिधेनीध्यानम्

(स्कान्दे लक्ष्मीनारायणसंवादे)

मयूरास्या शुभ्रवर्णा कटकद्वयभूषिता ।
हस्ताभ्यां दधती पद्मं पीतवस्त्रमनूपमम् ।। 205

सामिधेनी समाख्याता । शुभ्रवर्णः । अस्योपवेदः आयुर्वेदः । हेमाद्रौ दानखण्डे शिवतत्त्वरत्नाकरे ।

145A/2

## ऋग्वेदाभिमानिसोमदेवताध्यानम्

(हेमाद्रौ दानखण्डे)

ऋग्वेदस्यात्रियं गोत्रं सोमं दैवं विदुर्बुधाः ।। 205A

### नवग्रस्तचन्द्रवद्ध्यानम्

श्वेतः श्वेताम्बरधरो दशाश्वः श्वेतभूषणः ।
गदापाणिर्द्विबाहुश्च कर्तव्यो वरदश्शशी ।। 206

(श्वेतवर्णः)

145A/3

### अथ यजुर्वेदस्वरूपम्

(नृसिंहप्रासादे)

अजास्यः पीतवर्णः स्यात् यजुर्वेदोऽक्षसूत्रधृत् ।
वामे कुलिशपाणिस्तु भूतिदो मङ्गळप्रदः ।। 207

(पीतवर्णः)

### अस्य पत्नी सृगाध्यानम्

(स्कान्दे लक्ष्मीनारायणसंवादे)

सृगाया लक्षणं शृणु -

रक्तवर्णा विशालाक्षी पद्महस्ता कृशोदरी ।

(रक्तवर्णा)

अस्य उपवेदः धनुर्वेदः हेमाद्रौ दानखण्डे ।

145A/4

### अथ यजुर्वेदाभिमानिरुद्रदेवताध्यानम्

(हेमाद्रौ दानखण्डे)

काश्यपं च यजुर्वेदं रुद्रदेवं तु तं विदुः ।। 208

### रुद्रस्सूर्यप्रत्यधिदेवताध्यानम्

पञ्चवक्त्रो वृषारूढः प्रतिवक्त्रं त्रिलोचनः ।
कपालशूलखट्वाङ्गपिनाकीन्दुशिराश्शिवः ।। 209

(श्वेतवर्णः)

145B/1

## अथ सामवेदस्वरूपम्

(नृसिंहप्रासादे)

नीलोत्पलदलाभासः सामवेदो हयाननः ।
अक्षमालान्वितो दक्षे वामे कुम्भधरस्स्मृतः ।। 210

(नीलवर्णः)

## अस्य पत्नीकुहूध्यानम्

(स्कान्दे लक्ष्मीनारायणसंवादे)

पूर्णेन्दुवदना शुभ्रा भुजद्वयविभूषिता ।
सव्ये शुकं तथा दक्षे धान्यमञ्जरिकां तथा ।। 211

दधाना सा कुहूदेवी । श्वेतवर्णा । अस्योपवेदो गान्धर्ववेदो हेमाद्रौ ।

145B/2

## अथ सामवेदाभिमानीन्द्रध्यानम्

(हेमाद्रौ दानखण्डे)

सामवेदोऽपि गोत्रेण भारद्वाजः पुरन्दरः ।। 211A

इन्द्रः बृहस्पत्यधिदेवतावत् ।

ध्यानम् -

चतुर्दन्तगजारूढो वज्राङ्कुशलसत्करः ।
प्राचीपतिः प्रकर्तव्यो नानाभरणभूषितः ।। 212

(स्वर्णवर्णः)

145B/3 **अथ अथर्वणवेदस्वरूपम्**

**(नृसिंहप्रासादे)**

अथर्वणाभिधो वेदो धवलो मर्कटाननः ।
अक्षमालान्वितो वामे दक्षे कुम्भधरस्स्मृतः ।। **213**

**(श्वेतवर्णः)**

**अस्य पत्नीसमिद्देवीध्यानम्**

**(स्कान्दे लक्ष्मीनारायणसंवादे)**

समिल्लक्षणमुच्यते -

सूकरास्या चकोराक्षी चम्पकाभा सितांशुका ।
भुजैश्चतुर्भिस्सन्धत्ते स्रुक्स्रुवौ कमलं घटम् ।। **214**

**(कनकवर्णा)**

अस्योपवेदः अर्थवेदः हेमाद्रौ, ग्रन्थान्तरेऽथर्वशिरः मन्त्रवेद इति च मन्त्ररत्नाकररीत्या कथितमस्ति । अस्य वेदस्य भुजगानन इत्यपि मन्त्ररत्नाकररीत्या कथनमस्ति ।

145B/4 **अथ अथर्वणवेदाभिमानिब्रह्मध्यानम्**

**(हेमाद्रौ दानखण्डे)**

अधिदैवं विजानीयात् वैतानं त्वप्यथर्वणे ।
ब्रह्मदेवं विजानीयात् रूपाण्यस्य शृणु प्रभो ।। **215**

ब्रह्मा बृहस्पतिप्रत्यधिदेवतावत् । ध्यानम् -

पद्मासनस्थं जटिलं चतुर्मुखम् अक्षमालास्रुवपुस्तककमण्डलुधरम् ।
कृष्णाजिनवाससं पार्श्वस्थितहंसं ब्रह्माणं भावयेत् ।। **216**

**(औचित्यात् पाटलवर्णः)**

146A/1 **अथ आयुर्वेदस्वरूपम्**

(नृसिंहप्रासादे)

आयुर्वेदो हरिद्राभो वानरास्यो विशालदृक् ।
अक्षसूत्रं सुधाकुम्भं बिभ्रदारोग्यदो भृशम् ।। 217

(हरिद्रावर्णः)

146A/2 **अथ आयुर्वेदाभिमानिधन्वन्तरिध्यानम्**

(आयुर्वेदतन्त्रे)

अरिजलजजलूकारत्नपीयूषकुम्भ-
प्रकटितकरकान्तः कान्तपीताम्बराढ्यः ।
सितवसनविराजन्मौलिरारोग्यदायी
शतमखमणिवर्णः पातु धन्वन्तरिर्नः ।। 218

(नीलवर्णः)

146A/3 **अथ प्रकारान्तरधन्वन्तरिध्यानम्**

(भागवते)

अथोदधेर्मथ्यमानात् काश्यपैरमृतार्थिभिः ।
उदतिष्ठन्महाराज पुरुषः परमाद्भुतः ।। 219
दीर्घपीवरदोर्दण्डः कम्बुग्रीवोऽरुणेक्षणः ।
श्यामलस्तरुणस्स्रग्वी सर्वाभरणभूषितः ।। 220
पीतवासा महोरस्कः सुमृष्टमणिकुण्डलः ।
नीलकुञ्चितकेशान्तः सुभगस्सिंहविक्रमः ।। 221
अमृतापूर्णकलशं बिभ्रद् वलयसंयुतः ।
स वै भगवतस्साक्षाद् विष्णोरंशांशसम्भवः ।। 222

धन्वन्तरिरिति ख्यातः आयुर्वेददृगिज्यभाक् ।। 222A

(श्यामवर्णः)

ध्यानानन्तरं मन्त्रागमे -

शङ्खं चक्रं जलूकां दधदमृतघटं चापि दोर्भिश्चतुर्भिः
सूक्ष्मं स्वच्छन्दहृद्यं कुशपरिविलसन्मौलिमम्भोजनेत्रम् ।
कालाम्भोदोज्ज्वलाङ्गं कटितटविलसच्चारुपीताम्बराढ्यं
वन्दे धन्वन्तरिं तं निखिलगदवनव्रातदावाग्निलीलम् ।। 223

(कृष्णमेघवर्णः)

## पुनर्ध्यानान्तरम्

(वैद्यशास्त्रे)

शङ्खं चक्रमुपर्यधस्स्थकरयोर्दिव्यौषधं दक्षिणे
वामेनान्यकरेण निर्मलसुधाकुम्भं जलूकावलिम् ।
बिभ्राणः करुणाकरः शुभकरः सर्वामयध्वंसकः
सर्वं मे दुरितं छिनत्तु भगवान् धन्वन्तरिस्सन्ततम् ।। 224

(औचित्यान्नीलवर्णः)

मन्त्रागमवैद्यशास्त्रयोरुक्ते द्वे लक्षणे अपि आयुर्वेदोक्तध्यानात् न भिद्येते । तस्मात् केवलं ध्यानश्लोकौ लिखितौ ।

## अथ वैद्यशास्त्रोक्तरीत्या रोगविशेषनामानि, चिकित्साप्रभेदाः, तैलमात्राञ्जनचूर्णकल्करसायनादिनामानि, वैद्यलक्षणं धन्वन्तरिमाहात्म्यं च

146B अष्टादशमहात्मानो वैद्याचार्यास्तु यैस्स्मृताः ।
तेषु धन्वन्तरिर्मुख्यः साक्षाद्विष्ण्वंशसम्भवः ।। 225

क्षुत्तृष्णादिनिरोधोद्धसर्वरोगनिदानवित् ।
सप्तोर्ध्वशतकायस्थमर्मस्थानविशेषवित् ।। 226

चिकित्साङ्गप्रकाराणामुपदेशनदेशिकः ।
नाडीत्रयगतिप्राज्ञो दोषत्रयविभागवित् ।। 227

सप्तधातूपधातूनां ह्रासवृद्धिविचक्षणः ।
तस्य स्मरणमात्रेण देहिनां देहसम्भवाः ।। 228

रोगास्साध्या असाध्या ये कष्टसाध्या इति त्रिधा ।
त्रीनसाध्यान् विना तत्र परे शाम्यन्ति तत्क्षणात् ।। 229

तृष्णारोगाश्छर्दिरोगास्स्वेदरोगास्तु नीरुजः ।
अरुच्याख्या उदावर्तरोगाः प्रदरनामकाः ।। 230

आनाहाख्या विषूच्याख्याः अस्थिग्रावाभिधा मदाः ।
क्रिमिरोगास्तथाष्ठीलास्सर्वेऽपि त्रिविधा मताः ।। 231

दन्तरोगा अजीर्णाख्या बहुमूत्राभिधा रुजः ।
अश्मर्याख्या विसर्प्याख्या रोगाश्चैते चतुर्विधाः ।। 232

शोभरोगाः पाण्डुरोगाः श्वासाः कासाश्च हिक्किताः ।
हृद्रोगा ग्रहणीरोगाः पृथक्पञ्चविधा अमी ।। 233

जिह्वारोगा अतीसारा रोगाश्चैते हि षड्विधाः ।
उन्मादाख्या अपस्मारा विषमा विदृधी रुजः ।। 234

पृथक्पृथक्सप्तविधाः नवभेदाश्च कामिलाः ।
महारोगा मूत्रकृच्छ्ररोगाश्चापि मसूरिकाः ।। 235

शूलरोगास्तालुरोगाः पृथगष्टविधा अमी ।
जिह्वारोगश्शिरश्शूलमूलगुल्माभिधा रुजः ।। 236

अमी द्वादशभेदाढ्यास्सन्निपातास्त्रयोदश ।
तथैवोदररोगाश्च भिन्नाष्षोडशधा पुनः ।। 237

नासारोगाः कण्ठरोगाः पृथगष्टादशात्मकाः ।
मेहरोगाश्श्लेष्मरोगाः कुष्ठरोगाश्च विंशतिः ।। 238

क्षयाभिख्यास्तथा रोगाः द्वाविंशतिविधान्विताः ।
कर्णरोगास्तथा पञ्चविंशतिप्रभिधायुताः ।। 239

व्रणरोगाः पित्तरोगाः अष्टाविंशतिधा पृथक् ।
नेत्ररोगाष्षण्णवतिः चतुष्षष्टिज्वरा अपि ।। 240

वातरोगप्रभेदाश्च विंशत्यूर्ध्वशतात्मिकाः ।
मूकत्वरोगस्सोमाख्यः सूतिकारोग एव च ।। 241

प्रत्यष्ठिलाख्यरोगश्च प्रतितुन्यभिधस्ततः ।
उपदंशाख्यरोगश्च पृथगेकविधा अमी ।। 242

सर्वे रोगाः प्रणश्यन्ति नानापापसमुद्भवाः ।
आरोग्यं भाग्यमायुश्च वर्धते तत्प्रसादतः ।। 243

ऐहिकं च सुखं सर्वं तथैवामुष्मिकं सुखम् ।
भवेत्करगतं सर्वं स्मृतेर्धन्वन्तरिप्रभोः ।। 244

पापानि च प्रशाम्यन्ति श्रेयश्चैवाभिवर्धते ।
भक्त्या धन्वन्तरिं ध्यात्वा देवतागुरुभक्तिमान् ।। 245

दान्तः शान्तः प्रसन्नात्मा सत्यवादी दयापरः ।
जितेन्द्रियस्सदाचारः क्रोधलोभविवर्जितः ।। 246

वैद्यशास्त्रार्थतत्त्वज्ञः सर्वलोकनिदानवित् ।
तत्तद्देहस्वभावज्ञः देशकालविशेषवित् ।। 247

यथाशास्त्रप्रयोक्ता च पथ्यापथ्यविवेचकः ।
सर्वौषधिस्वरूपज्ञः नाडीगतिविशेषवित् ।। 248

प्रयोगाणां विधानज्ञोऽप्यष्टस्थानपरीक्षकः ।
वैद्यश्रेष्ठः प्रयुञ्जीत तत्तद्रोगनिवृत्तये ।। 249

तैलमात्राञ्जनादीनि चूर्णं कल्करसायनम् ।
मात्रादीनां विशेषस्तु केषाञ्चिदिह कथ्यते ।। 250

आनन्दभैरवीविश्वमूर्तिनाम्नी च भैरवी ।
नवानन्दाभिधास्सप्तानन्दनाम्नी च भैरवी ।। 251

त्रिदोषभैरवी सन्निपातच्छेदनभैरवी ।
मृतोत्थापननाम्नी च तथा मण्डूरभैरवी ।। 252

त्रैलोक्यभैरवी सन्निपातविध्वंसिभैरवी ।
भैरव्याख्यापि च महाभैरवी लघुभैरवी ।। 253

147A इत्येवं भैरवीमात्रास्त्रयोदशविधास्स्मृताः ।
सामान्याग्निकुमाराख्या प्रतापाग्निकुमारिका ।। 254

स्याल्लघ्वग्निकुमाराख्या चोत्तमाग्निकुमारिका ।
तथैव नवलोहाग्निकुमाराख्यानसंयुता ।। 255

स्यात्प्राणाग्निकुमाराख्या स्यान्महाग्निकुमारिका ।
सद्रत्नाग्निकुमाराख्या सुसिद्धाग्निकुमारिका ।। 256

सद्दिव्याग्निकुमाराख्या चेत्येवं वैद्यसङ्ग्रहे ।
एता अग्निकुमाराख्यमात्रा दशविधास्स्मृताः ।। 257

सामान्यभूपतिर्मात्रा नवलोहाख्यभूपतिः ।
रत्नभूपतिमात्रा च सिद्धभूपतिनामिका ।। 258

प्रतापभूपतिर्मात्रा लघुभूपतिसंज्ञिका ।
महाभूपतिमात्रा च प्राणभूपतिनामिका ।। 259

दिव्यभूपतिमात्रा च मात्रा चोत्तमभूपतिः ।
एवं भूपतिमात्रास्तु दशधा सम्प्रकीर्तिताः ।। 260

पूर्णचन्द्रोदयाभिख्या मात्रा योगिरसाभिधा ।
सुदर्शनरसाभिख्या मात्रा रत्नाकराख्यया ।। 261

नारायणास्त्रमात्रा च महाक्रव्यादिसंज्ञिका ।
रामचन्द्ररसाभिख्या वातराक्षसनामिका ।। 262

महाराजमृगाङ्काख्या वसन्तकुसुमाकरः ।
भोपारसाख्या त्रैलोक्यचिन्तामणिसमाह्वया ।। 263

सर्वेश्वररसाभिख्या चिन्तामणिरसाभिधा ।
सुवर्णमाल्यवासन्तरसमात्रा तथापरा ।। 264

मात्रा प्रोक्ता पुनर्लक्ष्मीविलासरससंज्ञिका ।
एतास्सर्वा अपि महारसमात्रा इति श्रुताः ।। 265

महानारायणीतैलं ज्योतिष्मत्याह्वयं तथा ।
महापूतीकादितैलं भृङ्गामलकसंज्ञकम् ।। 266

लाक्षातैलं च बिल्वादितैलं त्रिस्नेहनामकम् ।
तथा भल्लातकीतैलं केतकीतैलमेव च ।। 267

मधूकतैलमित्यादितैलानि प्रथितानि हि ।
नारिकेलाञ्जनं चन्द्रोदयाञ्जनसमाह्वयम् ।। 268

सुनेत्राञ्जनकपीराञ्जने च कुसुमाञ्जनम् ।
तिलपुष्पाञ्जनं चैव सुकुमाराञ्जनं तथा ।। 269

चक्षुः प्रसादकान्येतान्यञ्जनानि महान्ति हि ।
तथैव भुवनैश्वर्याद्याख्याश्चूर्णा रुजापहाः ।। 270

रसायनानि दिव्यानि मधुस्नुह्यादिकानि हि ।
रसस्वर्णप्रवालादिभस्मान्यपि महान्ति वै ।। 271

सर्वरोगविनाशाय प्रयोक्तव्यानि शास्त्रतः ।
अञ्जनं लङ्घनं कल्कः कषायस्तैललेपने ।। 272

विरेचनं च वमनं पाचनं मर्दनं घृतम् ।
नस्यं चूर्णश्च गण्डूषः पथ्यं स्वेदनकर्म च ।। 273

जलूकिकाप्रयोगश्च धूपश्चोष्मचिकित्सनम् ।
भस्मप्रयोगोऽभिषेकरसगन्धकदापनम् ।। 274

महामात्राप्रयोगश्च दानं होमश्च पूजनम् ।
रसायनं शस्त्रवेद्यं तथैवाग्निचिकित्सनम् ।। 275

चिकित्सायाः क्रमा एते एकोनत्रिंशदीरिताः ।
औचित्यात्सर्वरोगेषु प्रयोक्तव्या हि शास्त्रतः ।। 276

गोक्षीरं माहिषक्षीरं गजक्षीरं तथाविकम् ।
उष्ट्रक्षीरमजाक्षीरं मानुषीक्षीरमेव च ।। 277

तथैव रासभीक्षीरं बडबाक्षीरमित्यपि ।
क्षीराणि नव चैतानि चिकित्सार्हाणि रोगिणाम् ।। 278

तत्तद्रोगानुसारेण दातव्यानि चिकित्सकैः ।
हीनोपकरणश्चण्डो वैद्यमानी भयाकुलः ।। 279

अविधेयस्तथैवार्तः व्यग्रः शोकातुरश्शठः ।
दीर्घद्वेषी कृतघ्नश्च गतायुष्को नृपाहितः ।। 280

एते सर्वे चिकित्सायां अयोग्या इति कीर्तिताः ।
तीक्ष्णाग्निश्चैव मन्दाग्निस्समाग्निर्विषमानलः ।। 281

इत्येवं वैद्यशास्त्रोक्ताश्चतुर्धा जाठराग्नयः ।
धन्वन्तरिं हरिं साक्षाद् यो भक्त्या भजते सदा ।। 282

147B आधिव्याधिभयं तस्य नास्ति नास्त्येव सर्वथा ।। 282A

147B/1 **अथ धनुर्वेदस्वरूपम्**

**(नृसिंहप्रासादे)**

पीतवर्णो धनुर्वेदः पिकवक्त्रो महातनुः ।
धनुर्बाणधरो रौद्रो मस्तके कपिला जटाः ।। 283

**(पीतंवर्णः)**

147B/2 **अथ धनुर्वेदाभिमानीन्द्रदेवताध्यानम्**

**(नृसिंहप्रासादे)**

श्वेतहस्तिसमारूढं वज्राङ्कुशलसत्करम् ।
सहस्रनेत्रं पीताभमिन्द्रं हृदि विभावये ।। 284

**(पीतवर्णः)**

शिष्टं मयूखोक्तशुक्रप्रत्यधिदेवतावत् ।

147B/3 **अथ धनुर्वेदस्वरूपान्तरम्**

**(नीतिप्रकाशिकायाम्)**

चतुष्पाच्च धनुर्वेदो रक्तवर्णश्चतुर्मुखः ।
अष्टबाहुस्त्रिणेत्रश्च साङ्ख्यायनसगोत्रवान् ।। 285

वज्रं खड्गं धनुश्चक्रं दक्षबाहुचतुष्टये ।
शतघ्नी च गदाशूलपट्टसा वामबाहुषु ।। 286

प्रयोगकोटीरयुतो नीत्यङ्गो मन्त्रकञ्चुकः ।
उपसंहारहृदयो शस्त्रास्त्रोभयकुण्डलः ।। 287

अनेकवल्गिताकारभूषणः पिङ्गलेक्षणः ।
जयमालापरिवृतो वृषारूढस्स उच्यते ।। 288

(रक्तवर्णः)

एतद्व्याख्याने रक्तवर्ण इत्यस्य तप्तकाञ्चनवर्ण इत्यर्थ उक्तः ।

**एतद्धनुर्वेदपादचतुष्टयसम्भूतद्वात्रिंशदायुधास्त्रप्रत्यस्त्रनामानि नीतिप्रकाशिकारीत्या लिख्यन्ते ।**

मुक्तं चैवाप्यमुक्तं च मुक्तामुक्तमतः परम् ।
मन्त्रमुक्तं च चत्वारि धनुर्वेदपदानि वै ।। 289

मुक्तं बाणादिविज्ञेयं खङ्गादिकममुक्तकम् ।
सोपसंहारमस्त्रं तु मुक्तामुक्तमुदाहृतम् ।। 290

148A उपसंहाररहितं मन्त्रमुक्तमिहोच्यते । 290A

चतुर्भिरेभिः पादैस्तु धनुर्वेदः प्रकाशते ।
शस्त्रमस्त्रं च प्रत्यस्त्रं परमास्त्रमितीव च ।। 291

चातुर्विध्यं धनुर्वेदे केचिदाहुर्धनुर्विदः ।
आदानं चैव सन्धानं विमोक्षस्संहृतिस्तथा ।। 292

धनुर्वेदश्चतुर्धेति वदन्तीति परे जगुः ।
तत्राद्यमतमालाम्ब्य मुक्तामुक्तायुधान्यहम् ।। 293

द्वात्रिंशद्भिस्ततो वक्ष्ये तत्रायं विस्तृतिक्रमः ।
धनूरिषुर्भिण्डिवालः शक्तिर्धृगणतोमराः ।। 294

नलिका लगुडः पाशः चक्रं वै दन्तकण्टकः ।
भृशुण्डीति द्वादशैते मुक्तभेदाः प्रकीर्तिताः ।। 295

धनुर्वेदस्याद्यपादः तवायं कथितो नृप ।
वज्रमीली च परशुः गोशीर्षमसिधेनुका ।। 296

लवित्रमास्तरः कुन्तः स्थूणः प्रासः पिनाककः ।
गदामुद्गरसीराश्च मुसलः पट्टसं तथा ।। 297

मौष्टिकं परिघश्चैव मयूखी च शतघ्निका ।
अमुक्ता विंशतिरिमे द्वितीयः पादमुच्यते ।। 298

मुक्तामुक्तानि शस्त्राणि द्वात्रिंशद्गणितानि ते ।
दण्डचक्रं धर्मचक्रं कालचक्रं तथैव च ।। 299

ऐन्द्रचक्रं शूलवतं ब्रह्मशीर्षं च मोदकी ।
शिखरी धर्मपाशं च तथा वारुणपाशकम् ।। 300

पैनाकास्त्रं च वायव्यं शुष्कार्द्रे शिखरास्त्रकम् ।
क्रौञ्चास्त्रं हयशीर्षं च विद्याविद्येऽस्त्रसंज्ञिके ।। 301

गान्धर्वास्त्रं नन्दनास्त्रं वर्षणं शोषणं तथा ।
प्रस्वापनप्रशमने सन्तापनविलापने ।। 302

मदनं मानवास्त्रं च सौमनं तामसं तथा ।
संवर्तं मौसलं सत्यं सौरं मायास्त्रमेव च ।। 303

त्वाष्ट्रमस्त्रं च सोमास्त्रं संहारं मानसं तथा ।
नागास्त्रं गारुडास्त्रं च शैलीषीकेऽस्त्रसंज्ञिके ।। 304

चतुश्चत्वारि चैतानि सोपसंहारकानि वै ।
वक्ष्यामि चोपसंहारान् क्रमप्राप्तं निबोधने ।। 305

यान् ज्ञात्वा वैरिमुक्तानि चास्त्राणि शमयिष्यसि ।
सत्यवान् सत्यकीर्तिश्च रभसो धृष्ट एव च ।। 306
प्रतिहारतरश्चैवाप्यवाङ्मुखपराङ्मुखौ ।
दृढनाभो लक्ष्यलक्ष्यावादिलक्ष्यस्सुनाभकः ।। 307
दशाक्षश्शतवक्त्रश्च दशशीर्षशतोदरौ ।
धर्मनाभो महानाभो धुंधुनाभस्सनाभकः ।। 308
ज्योतिषो विमलश्चैव नैरास्यत्रुशनावुभौ ।
योगन्धरस्सनिद्रश्च दैत्यः प्रमथनस्तथा ।। 309
सार्थिमाली धृतीमाली वृत्तिमान् रुचिरस्तथा ।
पित्र्यस्सौमनसश्चैव विधूतमकरौ तथा ।। 310
करवीरो धनरतीधान्यं वै कामरूपकः ।
जृम्भकावरुणौ चैव मोहः कामरुचिस्तथा ।। 311
वरुणस्सर्वदमनः सन्तानस्सर्पनाभकः ।
कङ्कालास्त्रं मौसलास्त्रं कपालास्त्रं च कङ्कणम् ।। 312
पैशाचास्त्रं चेति पञ्चाप्यसुरास्त्राणि भूपते ।
148B सत्यवान् सर्वदमनः कामरूपस्तथैव च ।। 313
योगंधरोऽप्यलक्ष्याश्चाप्यसुरास्त्रविघातकाः ।
चतुश्चत्वारिंशदेते पञ्चान्येऽन्यविमर्दनाः ।। 314
मेलयित्वा च पञ्चाशदेकोना ह्यस्त्रशामकाः ।
सर्वमोचननामा तु सुप्रख्यातनयो महान् ।। 315
मुक्तामुक्ताखिलशमे मद्वरात्प्रथितः परः ।
अयं तृतीयपादः स्यात् धनुर्वेदस्य भूपते ।। 316

मन्त्रमुक्तं चापि वक्ष्ये सावधानमनाः शृणु ।
विष्णुचक्रं वज्रमस्त्रं ब्रह्मास्त्रं कालपाशकम् ।। 317

नारायणं पाशुपतं न शाम्यन्तीतरास्त्रकैः ।
स्वान्यसंहारकाभावान्मन्त्रमुक्तान्यमूनि षट् ।। 318

अयं चतुर्थपादः स्यात् धनुर्वेदस्य सम्मतः ।। 318A

एतद्व्याख्याने विशेषः । ननु उपसंहारेषु एकोनपञ्चाशदुद्देशात्, पूर्वं चतुश्चत्वारिंशदस्त्रकथनात् उर्वरितपञ्चोपसंहार्याणि कानीत्याशङ्क्य कङ्कालादिपञ्चास्त्राण्युक्त्वा चैतेषु तदुपसंहारांश्च विवेचयन् तां शङ्कां परिहरति - कङ्कालेत्यादिना आसुरास्त्रविघातका इत्यन्तेन ।

आसुरास्त्राणि मयशम्बरमारीचविद्युज्जिह्वेन्द्रजित्सृष्टानि । अत्र कानिचित्सृज्यमानान्यपि सर्वज्ञया सुप्रभया पूर्वमेव तदुपसंहाराः सृष्टा इति अविरोधः । सर्वमोचनेति। ननु पञ्चाशदुपसंहारेषु एकोनानामेव विनियोग उक्तः । पुनरेकस्य क्वोपयोगः? इत्याशङ्कां तन्निर्देशाभावजनितन्यूनतां च परिहरति सर्वमोचनेत्यादिना । सर्वमोचननामा महान् ज्येष्ठः सुप्रभातनयः मुक्तामुक्तकोटिप्रविष्टैकोनपञ्चाशत्सङ्ख्याकासुरदेवास्त्रसमूहशामकः । एकैकास्त्रशामका एव एकोनपञ्चाशत्सङ्ख्यायामुक्ता इत्यविरोधः । दैवास्त्रासुरास्त्रैतदुपसंहारास्त्रसर्वोपसंहारास्त्राप्रतिहतास्त्रैः सह पञ्चोत्तरशतस्य विवरः । पूर्वोक्तदैवास्त्राणि चतुश्चत्वारिंशत् । आसुरास्त्राणां पञ्चानां विवरः । कङ्कालास्त्रमेकम् । मौसलास्त्रमेकम्। कापालास्त्रमेकम् । कङ्कणास्त्रमेकम् । पैशाचास्त्रमेकम् ।

(उभयम्) एकोनपञ्चाशदस्त्राणाम् उपसंहारास्त्राणि -

एकोनपञ्चाशदस्त्रेषु प्रथमं 'सत्यवान्' इत्यस्त्रं, सप्तचत्वारिंशत्तमं सर्वदमनास्त्रं एकचत्वारिंशत्तमं कामरूपास्त्रं, पञ्चविंशतितमं यौगन्धरास्त्रं, नवमम् अलक्ष्यास्त्रं चेति पञ्च कङ्कालाद्यासुरास्त्राणाम् उपसंहारास्त्राणि । शिष्टानां चतुश्चत्वारिंशद्-

दैवास्त्राणाम् उपसंहारास्त्रं दैवासुरास्त्रसमूहोपशामकसर्वमोचनास्त्रमेकम् । अप्रति-हतास्त्राणां षण्णां विवरः । विष्णुचक्रास्त्रमेकम् । वज्रास्त्रमेकम् । ब्रह्मास्त्र-मेकम् । कालपाशास्त्रमेकम् । नारायणास्त्रमेकम् । पाशुपतास्त्रमेकम् । इति मिलित्वा पञ्चोत्तरशतास्त्राणि ।

149A

## अथ देवतादिहस्तस्थितायुधादीनि

(अस्मत्कृतचामुण्डालघुनिघण्टौ प्रथमप्रकरणे)

श्रीचामुण्डाम्बिकायै नमः

कल्याणैकनिदानं कलये कन्दर्पकोटिलावण्यम् ।
चण्डादिभेदशौण्डं चामुण्डाख्यं महः परं भावे ।। 319

सुदर्शनं पाञ्चजन्यः पाशाङ्कुशधनुश्शराः ।
खड्गखेटगदाशूलशक्तिकुन्तपरश्वधाः ।। 320

हलदण्डलतावीणादंष्ट्रामुद्गरपट्टसाः ।
वज्रटङ्कध्वजामुण्डमुसलास्थिहुताशनाः ।। 321

स्मरचापः पञ्चशराः खट्वाङ्गो डमृगो मृगः ।
घण्टावेत्रक्षुरप्रासपिञ्छभल्लाहि तोमराः ।। 322

कष्टारिका भिण्डिवालः परशुर्दन्तचामरे ।
कपालचर्मफलकपद्मसूर्यनिशाकराः ।। 323

भृशुण्डी क्रकचः कण्ठः परिघः शृङ्गकुक्कुटौ ।
चन्द्रहासोऽमृतघटः शतघ्नीयन्त्रशृङ्खलाः ।। 324

छुरिका स्रुक्स्रुवौ सूची रुद्रवीणा कमण्डलुः ।
दर्पणः कर्तरी चक्रं नलिकं शङ्खढक्किके ।। 325

वज्रमुष्टिर्लोष्टभेदः लोष्टदण्डपताकिकाः ।
तूणीरशल्यव्यजनजिह्वाभेतालभेरिकाः ।। 326

वासीपर्वतकल्हारवृक्षा नाराचपुस्तके ।
कुद्दालदारुनिगलौ खनित्रं शालिमञ्जरी ।। 327

अक्षमाला पानपात्रं संदंशः पुष्पगुच्छकम् ।
नीलोत्पलं कोकनदं कशानखनिकृन्तनी ।। 328

लवित्रमार्जनीशूर्पकुठारधवलाम्बुजम् ।
शरावक्षेपणीपाशौ चम्मटी वर्मशृङ्गिका ।। 329

ह्रस्ववक्रच्छुरी प्रोक्ता दीर्घवक्रच्छुरी शुकः ।
सूचिहस्तोऽञ्जलिर्मुष्टिः चिन्मुद्रा वरदाभयः ।। 330

मातुलुङ्गं जलूकाख्यदाडिमीदानमोदकाः ।
आश्चर्यतर्जनमुखा इति देवादिपाणिगाः ।। 331

श्रीचामुण्डाकृपापूर्णकृष्णराजमहीभुजा ।
रचिता प्राज्ञमोदाय जीयादायुधमालिका ।। 332

149A & 149B प्रथमप्रकरणस्थायुधादिरूपाणि लिख्यन्ते ।

(१२८ आयुधानां चित्राणि समालिखितानि)

150A अथ वेदषडङ्गादिशास्त्रस्वरूपाणि ।

एतदभिमानिदेवताध्यानानि च ।

(नृसिंहप्रासादे शैवागमे हेमाद्रौ मयूखे पाञ्चरात्रे
कारणागमे भट्टभास्करीये व्रतकल्पे च)

## तत्र शास्त्रनामानि तदभिमानिदेवतानामानि च

(नृसिंहप्रासादे)

शिक्षा प्रजापतिर्ज्ञेयः कल्पो ब्रह्मा प्रकीर्तितः ।
सारस्वतं व्याकरणं निरुक्ते वरुणः प्रभुः ।। 333

छन्दोऽदितिस्तथैवासीत् ज्योतिषं भगवान् हरिः ।
मीमांसा भगवान् सोमो न्यायमार्गस्समीरणः ।। 334

धर्मश्च धर्मशास्त्राणां पुराणस्य तथा मनुः ।
इतिहासः प्रजाध्यक्षो धनुर्वेदे शतक्रतुः ।। 335

आयुर्वेदे तथा साक्षात् देवो धन्वन्तरिः प्रभुः ।
गान्धर्ववेदो वाग्देवी नृत्तशास्त्रं महेश्वरः ।। 336

सङ्कर्षणः पाञ्चरात्रं रुद्रः पाशुपतं तथा ।
पातञ्जलमनन्तश्च साङ्ख्यं च कपिलो मुनिः ।। 337

अर्थशास्त्राणि सर्वाणि धनाध्यक्षः प्रकीर्तितः ।
कलाशास्त्राणि सर्वाणि कामदेवो जगद्गुरुः ।। 338

अन्यानि यानि शास्त्राणि यत्कर्माणि प्रचक्षते ।
स एव देवता तस्य शास्त्रं काव्यं च वेदवत् ।। 339

150A/1

### तत्र शिक्षास्वरूपम्

(नृसिंहप्रासादे)

शिक्षा शुभ्राभयकरा ज्ञानमुद्रासमन्विता ।
साक्षसूत्रा सकुण्डा च षड्भुजा दण्डपङ्कजा ।। 340

(शुभ्रवर्णः)

150A/2 **अथ शिक्षाभिमानिदेवताप्रजापतिध्यानम्**

**(नृसिंहप्रासादे)**

पञ्चब्रह्मसु प्रजापतिर्ब्रह्मवत् ।
हंसयानेन कर्तव्यो न च कार्यश्चतुर्मुखः ।
सावित्री तस्य कर्तव्या वामोत्सङ्गगता शुभा ।। 341

**(पाटलवर्णः)**

ब्रह्मोक्तं परमं रूपं सर्वं कार्यं प्रजापतेः । 341A

150A/3 **अथ कल्पस्वरूपम्**

**(नृसिंहप्रासादे)**

कल्पस्तु कुमुदाभः स्याद्वायसास्यो महोदरः ।
कुठारदण्डाब्जहस्तो मेखलाकुण्डलान्वितः ।। 342

**(कुमुदवर्णः)**

150A/4 **अथ कल्पाभिमानिब्रह्मध्यानम्**

**(शैवागमे)**

त्रिमूर्त्यन्तर्गतब्रह्मवत् ।
चतुर्मुखं चतुर्बाहुं कमण्डल्वक्षधारिणम् ।
यज्ञसूत्रोत्तरीयं च जटामकुटसंयुतम् ।। 343
सव्यहस्तेऽक्षमालां च वामहस्ते कमण्डलुम् ।
स्रुवं दक्षिणहस्ते तु पुस्तकं वामहस्तके ।। 344
अम्बुजासनमासीनं ब्रह्माणं हसनोन्मुखम् । 344A

**(पाटलवर्णः)**

150B/1

### अथ व्याकरणस्वरूपम्

(नृसिंहप्रासादे)

सितं व्याकरणं ज्ञेयं मयूराभसटोदरम् ।
वीणाकरान्वितं दिव्यं दिव्यवस्त्रविभूषितम् ।। 345

(शुभ्रवर्णः)

150B/2

### अथ व्याकरणाभिमानिसरस्वतीदेवताध्यानम्

(हेमाद्रौ)

दोर्भिर्युक्ता चतुर्भिस्स्फटिकमणिमयीमक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण ।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानासमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ।। 346

(श्वेतवर्णः)

150B/3

### अथ निरुक्तस्वरूपम्

(नृसिंहप्रासादे)

इन्दुवन्निर्मलं शान्तं बकवक्त्रं कृशोदरम् ।
पाशपङ्कजसंयुक्तं साक्षसूत्रं सपुस्तकम् ।। 347
निरुक्तमिति निर्णीतं छन्दो निर्णीयतेऽधुना । 347A

(शुभ्रवर्णः)

150B/4

### अथ निरुक्ताभिमानिवरुणदेवताध्यानम्

(मयूखे)

दिक्पालवरुणवत् ।

नागपाशधरो रत्नभूषणः पद्मिनीप्रियः ।
वरुणोऽम्बुपतिस्स्वर्णवर्णो मकरवाहनः ।। 348

(स्वर्णवर्णः)

150B/5 **अथ छन्दश्शास्त्रस्वरूपम्**

**(नृसिंहप्रासादे)**

जपाकुसुमसङ्काशं छन्दो ज्ञेयं विचक्षणैः ।
चकोरास्यं जपापुष्पं शक्तिं बिभ्रच्छिखान्वितम् ।। 349
लोहकुण्डलकोपेतं प्रवालकृतभूषणम् । 349A

(रक्तवर्णः)

150B/6 **अथ छन्दोऽभिमान्यदितिदेवताध्यानम्**

**(शैवागमे)**

पुनर्वस्वधिदेवतावत् ।
अदितिः पीतवर्णा च स्रुक्स्रुवाक्षकमण्डलून् ।
दधाना शुभदा मे स्याद्देवमाता यशस्विनी ।। 350

(पीतवर्णः)

151A/1 **अथ ज्योतिषस्वरूपम्**

**(नृसिंहप्रासादे)**

ज्योतिषं च बिडालास्यमिन्द्रगोपनिभं शुभम् ।
अक्षसूत्रं जपां बिभ्रत् हस्तयोर्दक्षवामयोः ।। 351

(रक्तवर्णः)

151A/2

## अथ ज्योतिषाभिमानिहरिध्यानम्

(पाञ्चरात्रे)

चतुर्विंशतिमूर्तिस्थहरिवत् ।

हरिः कनकवर्णः स्यात् शङ्खचक्रगदाब्जभृत् ।
दक्षाधः करे शङ्खः दक्षोर्ध्वकरे चक्रम् ।। 352
वामोच्चकरे पद्मं वामाधः करे गदा ।। 352A

(कनकवर्णः)

151A/3

## अथ मीमांसाशास्त्रस्वरूपम्

(नृसिंहप्रासादे)

सोमकीर्तिसुधाभासं मीमांसाशास्त्रमुत्तमम् ।
अक्षसूत्रं दधद्दक्षे सुधापूर्णं घटं परे ।। 353

(श्वेतवर्णः)

151A/4

## अथ मीमांसाभिमानिदेवतासोमध्यानम्

(शैवागमे)

नवग्रहस्थचन्द्रवत् ।

श्वेतः श्वेताम्बरधरो दशाश्वः श्वेतभूषणः ।
गदापाणिर्द्विबाहुश्च कर्तव्यो वरदश्शशी ।। 354

(श्वेतवर्णः)

151A/5 **अथ न्यायशास्त्रस्वरूपम्**

**(नृसिंहप्रासादे)**

अतसीपुष्पसङ्काशो न्यायो ज्ञेयो विपश्चिता ।
सिंहास्यो दक्षिणे सूत्रं ध्वजं वामकरे दधत् ।। **355**

**(नीलवर्णः)**

151A/6 **अथ न्यायशास्त्राभिमानिदेवतावायुध्यानम्**

**(शैवागमे)**

पञ्चभूतस्थवायुवत् ।
धावद्धरिणमारूढं द्विभुजं ध्वजधारिणम् ।
वरदानकरं धूम्रवर्णं वायुमहं भजे ।। **356**

**(धूम्रवर्णः)**

151B/1 **अथ धर्मशास्त्रस्वरूपम्**

**(नृसिंहप्रासादे)**

धर्मशास्त्रं सितं शान्तं चारुवक्त्रं कुशासनम् ।
मुक्ताजपाक्षधृद्दक्षे तुलाहस्तं तु वामतः ।। **357**

**(श्वेतवर्णः)**

151B/2 **अथ धर्मशास्त्राभिमानिधर्मपुरुषध्यानम्**

**(हेमाद्रौ दानखण्डे)**

चतुर्वक्त्रः चतुर्बाहुः चतुष्पादः सिताम्बरः ।
सर्वाभरणवान् श्वेतो धर्मः कार्यो विजानता ।। **358**

दक्षिणे चाक्षमाला च तस्य वामे तु पुस्तकम् । 358A

वराभययुतः कार्यः ।

(श्वेतवर्णः)

151B/3

## अथ पुराणस्वरूपम्

(नृसिंहप्रासादे)

पुराणं चम्पकाभासं शुकवक्त्रं च तुन्दिलम् ।

अक्षसूत्राभयं ज्ञेयं नानाभरणभूषितम् ।। 359

(चम्पकवर्णः)

151B/4

## अथ पुराणाभिमानिस्वायम्भुवमनुध्यानम्

(शैवागमे, सिद्धान्तशेखरे)

स्वायम्भुवमनुवत् ।

आद्यस्स्वायम्भुवो ब्रह्मपुत्रो मनुरिति स्मृतः । 359A

(श्वेतवर्णः)

151B/5

## अथ इतिहासस्वरूपम्

(नृसिंहप्रासादे)

इतिहासः कुशाभासः सूकरास्यो महोदरः ।

अक्षसूत्रं घटं बिभ्रत् पङ्कजावरणान्वितः ।। 360

(दूर्वाश्यामवर्णः)

151B/6

## अथ इतिहासाभिमानिप्रजापतिब्रह्मध्यानम्

(नृसिंहप्रासादे)

पञ्चब्रह्मस्थप्रजापतिब्रह्मवत् ।

हंसयानेन कर्तव्यो न च कार्यश्चतुर्मुखः ।
सावित्री तस्य कर्तव्या वामोत्सङ्गगता शुभा ।। 361

ब्रह्मोक्तं परमं रूपं सर्वं कार्यं प्रजापतेः । 361A

(पाटलवर्णः)

152A/1 **अथ भरतशास्त्रस्वरूपम्**

**(नृसिंहप्रासादे)**

नृत्तशास्त्रमिदं ज्ञेयं मृगवक्त्रं जटाधरम् ।
अक्षसूत्रं त्रिशूलं च बिभ्राणं च त्रिलोचनम् ।। 362

**(औचित्यात् श्वेतवर्णः)**

152A/2 **अथ भरतशास्त्राभिमान्युमामहेश्वरध्यानम्**

**(कारणागमे)**

धवलाभसुखासनदेवियुतं मृगशिशुटङ्कवराभयहस्तम् ।
सुसुखीकृतमुत्पलदृग्वरदं उमया सह देव सुरूपमिदम् ।। 363

**(श्वेतवर्णः)**

152A/3 **अथ पाञ्चरात्रशास्त्रस्वरूपम्**

**(नृसिंहप्रासादे)**

पाञ्चरात्राभिधं शास्त्रं लावण्यवृषवाहनम् ।
अक्षसूत्रं हलं धत्ते वनमालाविभूषितम् ।। 364

**(श्वेतवर्णः)**

एतदभिमानिवत् ।

152A/4

## अथ पाञ्चरात्रशास्त्राभिमानिसङ्कर्षणध्यानम्

(भट्टभास्करीये)

व्यूहमूर्तिवत् ।

वासुदेवस्वरूपेण कार्यस्सङ्कर्षणः प्रभुः ।

स तु शुक्लवपुः कार्यो नीलवासा यदूत्तमः ।। 365

गदास्थाने च मुसलं चक्रस्थाने च लाङ्गलम् । 365A

दक्षोर्ध्वकरे शङ्खः । दक्षाधःकरे मुसलम् । वामाधःकरे शार्ङ्गम् । वामोर्ध्वकरे लाङ्गलम् ।

(शुक्लवर्णः)

152A/5

## अथ पाशुपतशास्त्रस्वरूपम्

(नृसिंहप्रासादे)

शास्त्रं पाशुपतं शुभ्रं व्यालवक्त्रं कृशोदरम् ।

सूत्रपात्रधरं भीमं व्याघ्रचर्माम्बरावृतम् ।। 366

(शुभ्रवर्णः)

152A/6

## अथ पाशुपतशास्त्राभिमानिरुद्रध्यानम्

(मयूखे)

सूर्यप्रत्यधिदेवतावत् ।

पञ्चवक्त्रो वृषारूढः प्रतिवक्त्रं त्रिलोचनः ।

कपालशूलखट्वाङ्गपिनाकीन्दुशिराश्शिवः ।। 367

(औचित्यात् श्वेतवर्णः)

152B/1 **अथ पातञ्जलशास्त्रस्वरूपम्**

**(नृसिंहप्रासादे)**

पातञ्जलाभिधं रक्तं सर्पवक्त्रं सुतेजसम् ।
अक्षसूत्रं पताकां च दधतं कुण्डलान्वितम् ।। **368**

**(रक्तवर्णः)**

152B/2 **अथ पातञ्जलशास्त्राभिमान्यनन्तध्यानम्**

**(अनन्तव्रतकल्पे)**

अनन्तकल्पस्थानन्तवत् ।

नवाम्रपल्लवाभासं पिङ्गभ्रूश्मश्रुलोचनम् ।
दक्षिणोर्ध्वकरे पद्मं शङ्खं तस्याप्यधः करे ।। **369**

चक्रमूर्ध्वकरे वामे गदां तस्याप्यधःकरे ।
बिभ्रतं पुण्डरीकाक्षं फणासप्तान्वितं भजे ।। **370**

**(गोमूत्रवर्णः)**

152B/3 **अथ साङ्ख्यशास्त्रस्वरूपम्**

**(नृसिंहप्रासादे)**

साङ्ख्यं तत्कपिलं बभ्रुवक्त्रमुज्ज्वलकुण्डलम् ।
जाप्यदण्डधरं दीर्घं नखलोमजपाधरम् ।। **371**

**(कपिलवर्णः)**

152B/4 **अथ साङ्ख्यशास्त्राभिमानिकपिलर्षिध्यानम्**

**(पाञ्चरात्रे मन्त्राध्याये)**

प्रोद्यद्दिवाकरसमानतनुं सहस्र-
सूर्योरुदीधितिभिराप्तसमस्तलोकम् ।

ज्ञानाभयाङ्कितकरं कपिलं च शस्तं
ध्यायेदजादिसमितिं प्रतिबोधयन्तम् ।। 372

(रक्तवर्णः)

152B

## अथ चतुष्षष्टिकलानां नामानि

(शिवतत्त्वरत्नाकरे)

अन्ये तु मूलतां यान्ति चतुष्षष्टिकलास्वपि ।
कलास्ताः कथयाम्यद्य समाहितमनाः शृणु ।। 373
अथेतिहासागमौ च काव्यालङ्कारनाटकम् ।
गायकत्वं कवित्वं च कामशास्त्रं दुरोदरम् ।। 374
देशभाषालिपिज्ञानं लिपिकर्म च वाचकम् ।
गणितव्यवहारौ च स्वरशास्त्रं च शाकुनम् ।। 375
सामुद्रकं रत्नशास्त्रं गजाश्वरथकौशलम् ।
मल्लशास्त्रं सूपशास्त्रम् अवधानं च दोहलम् ।। 376
गन्धवादो धातुवादः खनिवादो रसस्य च ।
तिर्यग्भाषापरिज्ञानं खड्गस्तम्भो जलस्य च ।। 377
वाचस्स्तम्भो वयस्स्तम्भो वश्याकर्षणमोहनम् ।
विद्वेषणोच्चाटने च मारणं कालवञ्चनम् ।। 378
परकायप्रवेशश्च पादुकासिद्धिरेव च ।
महेन्द्रजालं वाक्सिद्धिः अग्निस्तम्भेन्द्रजालके ।। 379
अञ्जनं परदृष्टेश्च वञ्चनं स्वरवञ्चनम् ।
मणिमन्त्रौषधादीनां सिद्धयश्चोरकर्म च ।। 380

चित्रलोहाश्ममृद्दारुवेणुचर्माम्बरक्रियाः ।
153A आखेटो घटिकासिद्धिरदृश्यकरणं तथा ।। 381

वाणिज्यं पाशुपाल्यं च कृषिरासवकर्म च ।
लावकुक्कुटमेषादियुद्धकारककौशलम् ।। 382

चतुष्षष्टिकलास्त्वेता विद्वद्भिः परिकीर्तिताः । 382A

### अथ प्रभुशक्तिमन्त्रशक्त्युत्साहशक्तित्रयध्यानम्

**(कारणागमे)**

### उपायचतुष्टयध्यानम्

**(कारणागमे)**

153A/1

### तत्र प्रभुशक्तिध्यानम्

**(कारणागमे)**

प्रभुशक्तिः प्रभावाख्या देवी क्षात्रगुणानुगा ।
स्त्रीरूपिणी पाटलाभा श्वेताश्ववरवाहना ।। 383

करण्डमकुटाचक्रशक्तिखड्गवराङ्कुशान् ।
दक्षे वामे शङ्खघण्टाखेटाभयगदास्तदा ।। 384

दशभिर्बिभ्रती हस्तैः शत्रुविध्वंसकारिणी ।
कौसुम्भवस्त्रं संवीतं पूजिता चेष्टदा नृणाम् ।। 385

**(पाटलवर्णः)**

153A/2

### अथ मन्त्रशक्तिध्यानम्

**(कारणागमे)**

मन्त्रशक्तिस्स्वर्णमुखी कुङ्कुमाभा किरीटिनी ।
खड्गचापौ भृशुण्डीं च शूलं शक्तिं वरं हलम् ।। 386

आवापबाणदण्डासिपुत्रीपाशाभयाङ्कुशान् ।
चतुर्दशभुजैर्धत्ते दक्षे वामे पृथक्पृथक् ।। 387

मत्तेभवाहना हीरकवचा मणिमेखला । 387A

(मुखे स्वर्णवर्णः देहे रक्तवर्णः)

153A/3

## अथ उत्साहशक्तिध्यानम्

(कारणागमे)

शक्तिरुत्साहरूपा तु सिन्दूरवदना शुभा ।
जाम्बूनदरुचिर्नृत्यन्मयूरवरवाहना ।। 388

षड्भिर्भुजैश्शक्तिचापवरपाशशराभयान् ।
दधाना क्रमशश्चित्रवसना मकुटोज्ज्वला ।। 389

उपायैर्वशयेच्छत्रून् देवी चेयं शुचिस्मिता । 389A

(मुखे सिन्दूरवर्णः शरीरे स्वर्णवर्णः)

153A/4

## अथ उपायचतुष्टयध्यानम्

(कारणागमे)

## अथ सामोपायध्यानम्

(कारणागमे)

गजारूढा स्मितमुखी कनकाभा सितांशुका ।
षड्भिर्भुजैश्चक्रशङ्खवराभयधनुश्शरान् ।। 390

दधती सार्चिता नित्यं वशयेच्छत्रुमण्डलम् । 390A

(कनकवर्णः)

153B/1

## अथ दानोपायध्यानम्

(कारणागमे)

दानोपायाख्यदेवस्तु शिबिकावरवाहनः ।
सन्ध्यारुणोऽष्टभिर्हस्तैश्चक्रं पद्मनिधिं वरम् ।। 391

धनुर्दक्षे करे शङ्खनिधिं कुन्तं शराभयान् ।
दधानः पीतवसनो किरीटाङ्गदशोभितः ।। 392

पूजितश्च शुभं दद्यात् वशयेद्रिपुमण्डलम् ।। 392A

(रक्तवर्णः)

153B/2

## अथ भेदोपायध्यानम्

(कारणागमे)

भेदोपायाख्यदेवस्तु तरक्षुवरवाहनः ।
मेघवर्णः करालास्यः क्रूरदंष्ट्रश्च दिग्भुजैः ।। 393

चक्रशूलधनुःपाशवरान् दक्षेऽथ वामके ।
शङ्खं दण्डं शरं खट्वाभयान् बिभ्रदरीन् वशे ।। 394

कलयेन्मर्दयेद्वापि किरीटकवचोज्ज्वलः । 394A

(मेघवर्णः)

153B/3

## अथ दण्डोपायध्यानम्

(कारणागमे)

दण्डोपायो रक्तवर्णः सिंहास्यः शववाहनः ।
चक्रशूलगदादण्डखड्गघण्टावरं धनुः ।। 395

कशाङ्कुशौ शरं वह्निं खेटपाशाभयान् वरम् ।
दधानो द्व्यष्टभिर्हस्तैः नीलशुक्लाञ्चितांशुकः ।। 396

पूजितो मर्दयेच्छत्रून् रणे रणविमर्दनः । 396A

(रक्तवर्णः)

153B/4

### अथ धर्मदेवताध्यानम्

(दानचिन्तामण्युदाहृतविष्णुधर्मोत्तरे)

चतुर्वक्त्रश्चतुर्बाहुः चतुष्पादस्सिताम्बरः ।
सर्वाभरणवान् श्वेतो धर्मः कार्यो विजानता ।। 397

दक्षिणे चाक्षमालां च तस्य वामे तु पुस्तकम् ।
वराभययुतौ हस्तौ तस्य दक्षिणवामयोः ।। 398

(श्वेतवर्णः)

153B/5

### अथ विश्वकर्मध्यानम्

(हेमाद्रौ दानखण्डे)

विश्वकर्मा तु कर्तव्यः श्मश्रुलो रशनाधरः ।
सन्दंशपाणिर्द्विभुजः तेजोमूर्तिधरो महान् ।। 399

(औचित्यात् कनकवर्णः)

153B/6

### अथ मयासुरस्वरूपम्

(हेमाद्रौ शिल्पशास्त्रे च)

मयनामा तु कर्तव्यः श्मश्रुदंष्ट्राकरालकः ।
मानदण्डधरो नीलो द्विभुजो दैत्यवर्धकः ।। 400

(नीलवर्णः)

154A/1 **अथ मन्त्रशास्त्रस्वरूपम्**

**(अष्टभोगनीतिशास्त्रे)**

मन्त्रशास्त्रं मर्कटास्यं सुवर्णाभं द्विनेत्रकम् ।
दण्डासिचर्मशूलं च बिभ्राणं रक्तवाससम् ।। **401**

**(स्वर्णवर्णः)**

एतदभिमानिदेवता ।

154A/2 **अथ काव्यस्वरूपम्**

**(अष्टभोगनीतिशास्त्रे)**

काव्यशास्त्रं प्रकर्तव्यं चम्पकाभं चतुर्भुजम् ।
पुस्तकं चाक्षमालां च घण्टां चैवासिपुत्रिकाम् ।। **402**
दधानं शिबिकारूढं ज्ञानदं शृणु भामिनि । **402A**

**(चम्पकवर्णः)**

एतदभिमानिनी वाणी देवता, चतुर्भुजा सरस्वतीवत् ।

154A/3 **अथ कामशास्त्रस्वरूपम्**

**(अष्टभोगनीतिशास्त्रे)**

पीतवर्णं कामशास्त्रं कुण्डलाभ्यां विराजितम् ।
पाशं चैवेक्षुदण्डं च कराभ्यां दधतं सदा ।। **403**

**(पीतवर्णः)**

एतदभिमानी कामदेवः द्विभुजकामवत् ।

154A/4 **अथ शकुनशास्त्रस्वरूपम्**

**(अष्टभोगनीतिशास्त्रे)**

शुक्लवर्णं तु शकुनं गजास्यं परिकीर्तितम् ।
छुरिकां चेक्षुदण्डं च दधानं पीतवाससम् ।। 404

**(शुभ्रवर्णः)**

एतदभिमानी बृहस्पतिः । नवग्रहस्थगुरुवत् ।

154B/1 **अथ अलङ्कारशास्त्रस्वरूपम्**

**(अष्टभोगनीतौ)**

पीतवर्णं विशालाक्षम् अलङ्कारं प्रकीर्तितम् ।
दर्पणं तालवृन्तं च कराभ्यां दधतं मुदा ।। 405

**(पीतवर्णः)**

एतदभिमानी सरस्वतीदेवता द्विभुजसरस्वतीवत् ।

154B/2 **अथ शिल्पशास्त्रस्वरूपम्**

**(अष्टभोगनीतौ)**

सुन्दराङ्गं पद्मवर्णं शिल्पशास्त्रं प्रकीर्तितम् ।
कशापाशधरं नित्यं श्वेताश्वरथवाहनम् ।। 406

**(पाटलवर्णः)**

एतदभिमानिदेवता विश्वकर्मा । देवशिल्पिविश्वकर्मवत् ।

154B/3 **अथ इन्द्रजालस्वरूपम्**

**(अष्टभोगनीतौ)**

इन्द्रजालं चेन्द्रमणीनिभकायं कृशोदरम् ।
भुजैष्षड्भिर्युतं चासिखट्वादण्डं कपालकम् ।। 407

चर्मासिपुत्रीं दधतं पीतवस्त्रयुतं सदा । **407A**

**(इन्द्रनीलवर्णः)**

एतदभिमानिदेवता ।

154B/4

## अथ नाट्यशास्त्रस्वरूपम्

**(अष्टभोगनीतौ)**

नाट्यशास्त्रं कुक्कुटास्यं रक्ताभं रक्तवाससम् ।
सव्ये पाशं चेक्षुदण्डं दक्षिणे च गदां हलम् ।। **408**
दधानं च चतुर्बाहुं कृशाङ्गं च भजाम्यहम् ।। **408A**

**(रक्तवर्णः)**

एतदभिमानिदेवता नन्दीश्वरः । नन्दीश्वरवत् ।

155A/1

## अथ सूपशास्त्रस्वरूपम्

**(अष्टभोगनीतौ)**

सूपशास्त्रं पीततनुं द्विभुजं परुषेक्षणम् ।
पानपात्रं च दण्डं च दधानं श्वेतवाससम् ।। **409**

**(पीतवर्णः)**

एतदभिमानिदेवता अग्निः । दिक्पालाग्निवत् ।

155A/2

## अथ मल्लविद्यास्वरूपम्

**(अष्टभोगनीतौ)**

मल्लविद्यात्मकश्शूरः कृष्णवर्णश्चतुर्भुजः ।
शङ्खं चक्रं गदां खड्गं दधानस्सुमनोहरः ।। **410**

**(कृष्णवर्णः)**

एतदभिमानिदेवता श्रीकृष्णः । चतुर्विंशतिमूर्तिस्थश्रीकृष्णवत् ।

155A/3 **अथ अथर्वणवेदोपवेदभूतमन्त्रवेदस्वरूपम्**

**(मन्त्ररत्नाकरे)**

मन्त्रवेदः खड्गखेटधारी सिंहमुखोऽसितः ।
अथर्वणस्योपवेदः कथितो मुनिपुङ्गवैः ।। **411**

**(नीलवर्णः)**

155A **अथ अष्टोत्तरशतब्रह्मक्षेत्रनामानि, ब्रह्मनामानि च**

**(पद्मपुराणे सृष्टिखण्डे त्रयस्त्रिंशाध्याये, ब्रह्मरुद्रसंवादे)**

ततस्तुष्टो हरं ब्रह्मा वाक्यमेतदुवाच ह ।
किं ते कामं करोम्यद्य पृच्छ मां यद्यदिच्छसि ।। **412**

रुद्र उवाच -

यदि प्रसन्नो मे नाथ वरदो यदि वा मम ।
तदेकं मे वद विभो यस्मिन् स्थातासि नित्यशः ।। **413**

केषु केषु च स्थानेषु त्वां पश्यन्ति सदा द्विजाः ।
नाम्ना च केन तत्स्थानं शोभते धरणीतले ।। **414**

तन्मे वदस्व देवेश त्वयि भक्तिगतस्य च ।। **414A**

ब्रह्मोवाच -

पुष्करेऽहं सुरश्रेष्ठ गयायां च चतुर्मुखः ।
कान्यकुब्जे वेदगर्भो भृगुकक्षे पितामहः ।। **415**

कावेर्यां सृष्टिकर्ता च नन्दिपुर्यां बृहस्पतिः ।
प्रभासे पद्मजन्मा च वानचर्यां सुरप्रियः ।। **416**

द्वारवत्यां तु ऋग्वेदी वैदिशे भुवनाधिपः ।
पौण्ड्रके पुण्डरीकाक्षः पिङ्गाक्षो हस्तिनापुरे ।। **417**

जयन्त्यां विजयश्चास्मि जयन्तः पुष्करावते ।
उद्रेषु पद्महस्तोऽहं नमोनद्यां नमोवदः ।। 418

अहिच्छत्रे जयानन्दी काञ्चीपुर्यां जनप्रियः ।
ब्रह्माहं पाटलीपुत्रे ऋषिकुण्डे मुनिस्तथा ।। 419

महीतारे मुकुन्दश्च श्रीकण्ठः शोणवासिते ।
कामरूपे शुभाकारो वाराणस्यां शिवप्रियः ।। 420

मल्लिकाक्षे तथा विष्णुः महेन्द्रे भार्गवस्तथा ।
गोनर्दे स्थविराकारः उज्जयिन्यां पितामहः ।। 421

155B कौशाम्ब्यां तु महाबोधिः अयोध्यायां च राघवः ।
मुनीन्द्रश्चित्रकूटे तु वराहो विन्ध्यपर्वते ।। 422

गङ्गाद्वारे परमेष्ठी हिमवत्यपि शङ्करः ।
देविकायां स्रुजाहस्तः स्रुवहस्तश्चतुर्वटे ।। 423

बृन्दावने पद्मपाणिः कुशहस्तश्च नैमिषे ।
गोलक्षे चैव गोपीन्द्रः सुचन्द्रो यमुनातटे ।। 424

भागीरथ्यां पद्मतनुः जलानन्दो जलन्धरे ।
कोङ्कणे चैव भद्राक्षः काम्पिल्ये कनकप्रियः ।। 425

वेङ्कटाद्रावन्नदाता शुभश्चैव क्रतुस्थले ।
लङ्कायां च पुलस्त्योऽहं काश्मीरे हंसवाहनः ।। 426

वसिष्ठश्चार्बुदे चैव नारदश्चोत्पलावते ।
मेलके श्रुतिदाताहं प्रयाजे यादसांपतिः ।। 427

सामवेदस्तथा यज्ञे मधुरे मधुरप्रियः ।
अङ्कोले यज्ञभोक्ता च ब्रह्मावासेऽमरप्रियः ।। 428

नारायणश्च गोविन्दे मायापुर्यां द्विजप्रियः ।
ऋषिबृन्दे दुराधर्षो देवायां मुरमर्दनः ।। 429

विजयायां महारूपः सुरूपो राष्ट्रवर्धने ।
पृथूदरस्तु माळव्यां शाकम्भर्यां रसप्रियः ।। 430

पिण्डालके तु गोपालः शङ्खोद्धारेऽङ्गवर्धनः ।
कादम्बके प्रजाध्यक्षो देवाध्यक्षस्समस्थले ।। 431

मार्कण्डो वटके चैव जलशाय्यहमम्बुदे ।
त्र्यम्बकस्त्रिपुरोद्देशे श्रीशैले च त्रिलोचनः ।। 432

महादेवः पद्मपुरे कपाले वैधवस्तथा ।
शृङ्गिबेरपुरे शौरिः नैमिषे चक्रपाणिकः ।। 433

दण्डपुर्यां विरूपाक्षो गौतमो धूतपापके ।
हंसनाथो माल्यवति द्विजेन्द्रो बालिके तथा ।। 434

इन्दुपुर्यां देवनाथो द्यूतवाह्यां पुरन्दरः ।
हंसवाहस्तु लम्बायां चण्डायां गरुडप्रियः ।। 435

महोदये महायज्ञः सुयज्ञो यज्ञकेतने ।
सिद्धिसारे पद्मवर्णो वेणायां पद्मबोधनः ।। 436

दाहने कौमुदीनाथो महापत्तौ विनायकः ।
पद्मजो मातृकास्थाने अलकायां कुलाधिपः ।। 437

त्रिकूटे चैव गोनर्दः पाताले वासुकिस्तथा ।
पद्माध्यक्षश्च केदारे कूष्माण्डे सुरतप्रियः ।। 438

कुण्डवाप्यां शुभाङ्गस्तु सारण्यां तक्षकस्तथा ।
अच्छोदे पापहा चैव ह्यम्बिकायां सुदर्शनः ।। 439

वरदायां महावीरः कान्तारे दुर्गनाशनः ।
अनन्तश्चैव कर्णाटे प्राकाश्यायां दिवाकरः ।। 440

विरजायां पद्मनाभः खरुद्रश्च वृकस्थले ।
पद्मावत्यां पद्मगृहो गगने पद्मकेतनः ।। 441

अष्टोत्तरं स्थानशतं मया ते परिकीर्तितम् ।
यत्र वै मम सान्निध्यं त्रिसन्ध्यं त्रिपुरान्तक ।। 442

एतेषामपि यस्त्वेकम् ईक्षते भक्तिमान्नरः ।
स्थानं स विरजं लब्ध्वा मोदते शाश्वतीः समाः ।। 443

**इत्यष्टोत्तरशतब्रह्मक्षेत्राणि ।**

156A **अथ भृग्वङ्गिरोगणः**

**(नृसिंहप्रासादे)**

**तत्र भृगुगणः**

कर्तव्याश्शुक्लरूपेण भृगवो वामदेवकः ।
भृवणो भावनश्चैव सुजन्यस्सुजनस्तथा ।। 444

क्रतुसर्वास्वनुर्नाम तथा चव्यश्श्रुतस्तथा ।
प्रवासश्चाव्ययश्चैव दक्षो द्वादशकस्तथा ।। 445

भृगवो नाम निर्दिष्टाः देवा द्वादश याज्ञिकाः । 445A

**(शुक्रवत् श्वेतवर्णः)**

**अथाङ्गिरोगणः**

जीवरूपेण कर्तव्या देवा आङ्गिरसास्तथा ।
आत्मा चायुर्मनो दक्षः पादप्रापस्तथैव च ।। 446

हविष्यश्च गविष्ठश्च ऋतस्सत्यश्च देवलः ।
एते चाङ्गिरसाः प्रोक्ताः मुनयो दश विश्रुताः ।। 447

(बृहस्पतिवत् पीतवर्णः)

## अथ अष्टाविंशतिः अतीतव्यासाः

(विष्णुपुराणे)

द्वापरे प्रथमे व्यस्ता स्वयं वेदाः स्वयम्भुवः ।
द्वितीये द्वापरे चैव वेदव्यासः प्रजापतिः ।। 448

तृतीये चोशना व्यासः चतुर्थे च बृहस्पतिः ।
सविता पञ्चमो व्यासो मृत्युषष्ठः स्मृतः प्रभुः ।। 449

सप्तमे च तथैवेन्द्रो वसिष्ठश्चाष्टमे स्मृतः ।
सारस्वतश्च नवमो विधाता दशमे स्मृतः ।। 450

एकादशे तु त्रिवृषा भरद्वाजस्तथापरः ।
त्रयोदशे चान्तरिक्षो वप्री चापि चतुर्दशे ।। 451

त्रैयारुणः पञ्चदशे षोडशे तु धनञ्जयः ।
कृतञ्जयः सप्तदशेऽरुणार्कोऽष्टादशः स्मृतः ।। 452

ततो व्यासो भरद्वाजः भरद्वाजात्तु गौतमः ।
गौतमादुत्तमो व्यासः हर्यात्मा योऽभिधीयते ।। 453

अथ हर्यात्मनो येन स्मृतो वाजिश्रवास्तु यः ।
सोमशुष्मायणस्तस्मात्तृणबिन्दुरिति स्मृतः ।। 454

ऋक्षोऽभूद्भार्गवस्तस्माद्वाल्मीकिर्योऽभिधीयते ।
तस्मादस्मत्पिता शक्तिर्व्यासस्तस्मादहं मुने ।। 455

जातूकर्ण्योऽभवन्मत्तः कृष्णद्वैपायनस्ततः ।
अष्टाविंशतिरित्येते वेदव्यासाः पुरातनाः ।। 456

| | | | |
|---|---|---|---|
| स्वयंभूव्यासः | वसिष्ठव्यासः | त्रैयारुणव्यासः | वाजिश्रवाव्यासः |
| प्रजापतिव्यासः | सारस्वतव्यासः | धनञ्जयव्यासः | तृणबिन्दुव्यासः |
| उशनाव्यासः | विधातृव्यासः | कृतञ्जयव्यासः | भार्गवव्यासः |
| बृहस्पतिव्यासः | त्रिवृषाव्यासः | अरुणार्कव्यासः | शक्तिव्यासः |
| सवितृव्यासः | भरद्वाजव्यासः | भारद्वाजव्यासः | अहंपराशरव्यासः |
| मृत्युव्यासः | अन्तरिक्षव्यासः | गौतमव्यासः | जातूकर्ण्यव्यासः |
| इन्द्रव्यासः | वप्रीव्यासः | उत्तमव्यासः | कृष्णद्वैपायनव्यासः |

156B पूर्वं लिखितेषु अष्टाविंशतिव्यासेषु एकविंशस्य उत्तमनामकस्य व्यासस्य हर्यात्मेति नामान्तरमस्ति । द्वाविंशस्य वाजिश्रवाख्यस्य व्यासस्य सोमशुष्मायण इति नामान्तरमस्ति । त्रयोविंशस्य तृणबिन्द्वाख्यस्य व्यासस्य ऋक्ष इति नामान्तरमस्ति । चतुर्विंशस्य भार्गवनामकस्य व्यासस्य वाल्मीकिरिति नामान्तरमस्ति ।

एतैः स्वयम्भूव्यासादिकृष्णद्वैपायनव्यासपर्यन्तैरष्टाविंशत्यतीतव्यासैः सार्धं **'भविष्ये द्वापरे चापि द्रौणिर्व्यासो भविष्यति'** इति वाक्येन द्रोणपुत्रस्य अश्वत्थाम्नः भविष्यद्द्वापरव्यासत्वमस्ति इति विष्णुपुराणे उक्तमस्ति ।

## अथ शिल्पपञ्चब्रह्मस्वरूपम्

### (विश्वपुराणान्तर्गतदेवशिल्पग्रन्थे)

मनोर्मयस्य त्वष्टुश्च विश्वज्ञस्य च शिल्पिनः ।
मूर्तिरूपाणि मे ब्रूहि कालहस्ती महामुने ।। 457

## तत्र मनुब्रह्मस्वरूपम्

(विश्वपुराणे)

मनुस्स्फटिकसङ्काशो भस्मोद्धूलितविग्रहः ।
स्मितप्रसन्नवदनैः पञ्चभिः परिशोभितः ।। 458

जटाप्रकरसम्बद्धस्फुरच्चन्द्रकलाधरः ।
गलद्गङ्गाम्बुसम्पातविग्रहो नीलकन्धरः ।। 459

सदा कालीसमायुक्तः सामगोऽग्रस्त्रिलोचनः ।
कर्णकण्ठावलग्नाहिफणामाणिक्यरञ्जितः ।। 460

लेखनीं पुस्तकं पाशमक्षसूत्रं करैर्वहन् ।
दण्डं कमण्डलुं चैव शूलं वज्रं वराभये ।। 461

सिंद्धचारणगन्धर्वयक्षकिन्नरसेवितः ।
स्तूयमानो मुनिगणैः वन्दितामरयूथपः ।। 462

लीलया मोहयन् विश्वं मनुरस्ति महीपते ।। 462A

(श्वेतवर्णः)

## अथ मयब्रह्मस्वरूपम्

(विश्वपुराणे)

मयो नीलाम्बुदश्यामः कमलामललोचनः ।
चतुर्बाहुर्गुडाकेशो गरुडासनसंस्थितः ।। 463

पीताम्बरधरश्शान्तो सात्त्विको भक्तवत्सलः ।
वनमालाङ्कितोरस्को हारकेयूरशोभितः ।। 464

सितगण्डस्थलोद्भासि कुण्डलद्वयमण्डितः ।
शङ्खचक्रगदाशार्ङ्गधरस्सुरगणावृतः ।। 465

रूपेणानेन शान्तेन ज्ञानयोगसमन्वितः ।
स मयो लीलया विश्वं संरक्षति सदा मुदा ।। 466

(नीलमेघवर्णः)

## अथ त्वष्टृब्रह्मस्वरूपम्

(विश्वपुराणे)

त्वष्टा चतुर्मुखश्शोणो राजते हंसवाहनः ।
रक्ताम्बरधरो देवो दिव्यचन्दनचर्चितः ।। 467

चतुर्मुखैश्चतुर्वेदान् परमेष्ठी पठत्यसौ ।
पद्मं च लेखनीं पुस्तं कुठारं च कमण्डलुम् ।। 468

शूलं दण्डं चाक्षसूत्रं बिभर्त्यष्टभुजैरयम् ।
सुरसङ्घैस्सदा सेव्यः सृष्टिकर्मणि संस्थितः ।। 469

(शोणवर्णः)

## अथ विश्वकर्मब्रह्मस्वरूपम्

(विश्वपुराणे)

विश्वकर्मा रक्तवर्णश्चतुर्बाहुर्द्विलोचनः ।
गदां शूलं च वज्रं च संदंशं च वहन् करैः ।। 470

भस्मोद्धूलितसर्वाङ्गो नानालङ्कारशोभितः ।
हेमाम्बरधरस्स्रग्वी पद्मस्थश्शुद्धविग्रहः ।। 471

देवशिल्पीति विख्यातो दैवाज्ञापरिपालकः । 471A

(रक्तवर्णः)

## अथ शिल्पिब्रह्मस्वरूपम्

**(विश्वपुराणे)**

**157A** शिल्पी मरकतश्यामः सहस्रनयनोज्ज्वलः ।
चित्रमाल्याम्बरधरो गजवाहनसंस्थितः ।। **472**
सदा देवाङ्गनागीतनृत्तवाद्यसुतोषितः ।
चापवज्रधरो दान्तो देवर्षिगणसेवितः ।। **473**
देवानामग्रणीरिन्द्रो रक्षसां कुलनाशनः । **473A**

**(मरकतवर्णः)**

एते पञ्चब्रह्माण एव पञ्चालजातिकारणभूताः । उपर्युक्तपञ्चब्रह्मणां प्रतिमाः लिखिताः सन्ति ।

**157A/1**

### तत्र मनुब्रह्मस्वरूपम्

**(विश्वपुराणे देवशिल्पे)**

**(स्फटिकवर्णः)**

एतस्य सम्बन्धेन अयःकारक इत्याख्यानाम् (अयःकर्मकाराणाम्) उत्पत्तिः ।

**157A/2**

### अथ मयब्रह्मस्वरूपम्

**(विश्वपुराणे देवशिल्पे)**

**(नीलमेघवर्णः)**

एतस्मात् काष्ठकारक इत्यस्य वर्धकिः उत्पत्तिः ।

**157A/3**

### अथ विश्वकर्मब्रह्मस्वरूपम्

**(विश्वपुराणे देवशिल्पे)**

**(रक्तवर्णः)**

एतस्मात् स्वर्णकार इत्याख्यस्य स्वर्णकर्मकारस्य उत्पत्तिः ।

157A/4

## अथ शिल्पिब्रह्मस्वरूपम्

(विश्वपुराणे देवशिल्पे)

(मरकतवर्णः)

एतस्मात् शिलाकारक इत्यस्य अश्मकर्मकारस्य उत्पत्तिः ।

157A/5

## अथ त्वष्टृब्रह्मस्वरूपम्

(विश्वपुराणे देवशिल्पे)

(शोणवर्णः)

एतस्मात् कांस्यकार इत्यस्य कांस्यकर्मकारस्य उत्पत्तिः ।

157B/1

## अथ कालपुरुषस्वरूपम्

(हेमाद्रौ दानखण्डे कालपुरुषदानप्रकरणे)

खड्गोद्यतकरो दीर्घो जपाकुसुमकुण्डलः ।
नीलो रक्ताम्बरस्रग्वी शङ्खमालाविभूषितः ।। 474

तीक्ष्णासिपुत्रीबन्धेन विष्फारितकटीतटः ।
उपानद्युगयुक्तो हि कृष्णकम्बलधारकः ।। 475

गृहीतमांसपिण्डश्च वामे करतले तथा । 475A

(नीलवर्णः)

असिपुत्री नाम छुरिकेत्यर्थः ।

157B/2

## अथ यमस्य क्रूररूपध्यानम्

(शुकसप्ततौ)

षष्टियोजनविस्तीर्णः शतयोजनमुन्नतः ।
कृष्णपक्षक्षपाकारो नीलाञ्जनसमांशुकः ।। 476

दीर्घदंष्ट्रो महावक्त्रो यमदण्डधरस्सदा ।
एतेषां दर्शने सोऽहं भवेयं पापकर्मिणाम् ।। 477

(कृष्णवर्णः)

157B/3 **अथ यमस्य सौम्यरूपध्यानम्**

(शुकसप्ततौ)

वराभयकरस्सौम्यो नेत्रद्वयसमन्वितः ।
सर्वाभरणसंयुक्तः प्रियवादी विशालदृक् ।। 478
पाटलाभः प्रसन्नास्यः भवेयं पुण्यकर्मिणाम् ।

(पाटलवर्णः)

157B/4 **अथ वनस्पतिस्वरूपम्**

(हेमाद्रौ दानखण्डे)

वृक्षस्कन्धारूढः किसलयपुष्पमञ्जरीधरः । 479
द्विभुजः वनस्पतिर्देवता ।।

(औचित्यात्पीतहरिद्वर्णः)

158A/1 **अथ बडबानलास्त्रध्यानम्**

(प्रपञ्चसारे)

बाणाग्रकोणस्थितमेधमानं परान् दहन्तं स्वमरीचिकोणैः ।
शोणाम्बरं चन्द्रकलावतंसं नमामि देवं बडबामुखास्त्रम् ।। 480

(औचित्याद्रक्तवर्णः)

158A/2

## अथ बडबाग्निस्वरूपम्

(प्रपञ्चसारे)

त्रिणयनमरुणेन्द्वाबद्धमौलिं सुशुक्लां-
शुकमरुणमनेकाकल्पमम्भोधिसंस्थम् ।
अभिमतवरशक्तिस्वस्तिकाभीतिहस्तं
नुतकनकसुमालालङ्कृताङ्गं कृशानुम् ।। 481

(अरुणवर्णः)

158A/3

## अथ कालकूटविषस्वरूपम्

(मत्स्यपुराणे)

सुवर्णमुक्ताफलभूषिताङ्गं किरीटिनं पीतदुकूलजुष्टम् ।
नीलोत्पलाद्यैर्विहिताङ्गकान्तिं गर्जन्तमम्भोधरभीमवेगम् ।। 482

(नीलवर्णः)

158A/4

## अथ अमृतलक्षणम्

(आयुर्वेदतन्त्रे)

मधुररससमेतं क्षुत्तृडाशानिवारं जननमरणवार्धक्यादिदोषापनोदम् ।
दिविजजनसुसेव्यं शुक्लवर्णं महौजस्तदमृतशुभदैवं सर्वदा भावयामि ।। 483

(शुक्लवर्णः)

## एतदमृतपूरितकमण्डलुधरधन्वन्तरिस्वरूपम्

(मत्स्यपुराणे)

धन्वन्तरिस्ततो देवो वपुष्मानुदतिष्ठत ।
श्वेतः कमण्डलुं बिभ्रदमृतं यत्र तिष्ठति ।। 484

(श्वेतवर्णः)

158B/1

## अथ चित्रसेनगन्धर्वध्यानम्

(प्रपञ्चसारे)

वन्दे गन्धर्वराजानं मणिमालाविभूषितम् ।
द्वादशस्त्रीपरिवृतं सुरसङ्घपुरस्सरम् ।। 485

कामदं चित्रसेनाख्यं कन्यादानसुदीक्षितम् ।
सुधर्माधिष्ठितं नित्यं शुद्धचामीकरप्रभम् ।। 486

मन्दारपुष्पसुमनोहरकेशपाशं वामभ्रुवां ललितविग्रहमप्रमेयम् ।
वन्दे च नित्यमभिराममनङ्गतुल्यमालोलकुन्तलमथाब्जदलायताक्षम् ।। 487

(कनकवर्णः)

158B/2

## अथ विश्वावसुगन्धर्वध्यानम्

(प्रपञ्चसारे)

ध्यायेदच्छरसान्विते रथवरे पुण्ड्रेक्षुभिः कल्पिते
कल्हारस्त्रगुपात्तपाणिकमलैः कन्याजनैस्सेवितम् ।
गन्धर्वाधिपतिं प्रसन्नवदनं विश्वावसुं यः पुमान्
मन्त्रं तस्य जपेल्लभेत नियतं कन्यामसौ काङ्क्षिताम् ।। 488

(गन्धर्वत्वात् कनकवर्णः)

159A/1

## अथ सामवेदोपवेदभूतगान्धर्ववेदस्वरूपम्

(मन्त्ररत्नाकरे)

वीणाधरो विशालाक्षः शोणश्शुकनिभाननः ।
गान्धर्ववेदस्स्रग्वी च ध्येयो वायव्यसंस्थितः ।। 489

(शोणवर्णः)

159A/2 **अथ गान्धर्ववेदाभिमानिदेवतावाग्देवीध्यानम्**

**(तत्पूजाकल्पे)**

श्वेतां श्वेताम्बरधरां जटामकुटमण्डिताम् ।
त्रिलोचनां चतुर्बाहुं वीणादत्तकरद्वयाम् ।। **490**

पुस्तकं चाक्षसूत्रं च बिभ्रतीं शुभ्रभूषणाम् ।
सितपुष्पधरां देवीं जगन्मातरमम्बिकाम् ।। **491**

पूर्णेन्दुवदनां दिव्यां वाग्देवीं पूजयाम्यहम् । **491A**

**(श्वेतवर्णः)**

**अथ षड्जादिसप्तस्वराणां देवतावंशजातिवयोवर्णादिद्वात्रिंशल्लक्षणानि**

**(अस्मत्कृतस्वरचूडामणिग्रन्थरीत्या लिख्यन्ते)**

श्रीचामुण्डां दयापूर्णां सर्वाभीष्टप्रदायिनीम् ।
सर्वलोकैकजननीं वन्दे त्रिपुरसुन्दरीम् ।। **492**

नन्द्यादिभरताचार्यप्रणीतागमवारिधेः ।
उद्धृत्य सारं प्राज्ञानां प्रमोदाय यथामति ।। **493**

षड्जादिस्वरवर्याणां द्वात्रिंशल्लक्षणात्मिकाः ।
वंशजातिवयोवर्णद्वीपाश्च रसगोत्रके ।। **494**

वाहाधिदेवते वक्त्रबाहुकर्णाक्षिनासिकम् ।
पाददेहायुधं वस्त्रं पुष्पं गन्धश्च भोजनम् ।। **495**

भूषणं वृक्षवनितातिथिवारभराशयः ।
छन्दोऽब्धिश्शैलनद्यश्च वक्ष्यन्ते क्रमशो मुदा ।। **496**

**इत्येवं पूर्वपीठिका**

## अथ षड्जस्वरस्वरूपलक्षणश्लोकाः

षड्जाभिधस्वरवरो देववंशसमुद्भवः ।
ब्रह्मजातिभवोऽशीतिवयस्कः पाटलच्छविः ।। 497

159B जम्बूद्वीपस्थितो वीररसवान् वह्निगोत्रजः ।
हंसवाहोऽग्निदैवत्यः चतुर्वक्त्रोऽष्टबाहुकः ।। 498

अष्टकर्णोऽष्टनेत्रश्च चतुर्नासो द्विपादकः ।
स्थूलदेहः खड्गधरः श्वेतवस्त्रधरस्तथा ।। 499

जातीपुष्पप्रियश्चैव कुङ्कुमात्तविलेपनः ।
दध्यन्नभोजनप्रीतो मुक्ताभरणभूषितः ।। 500

श्रिताम्रवृक्षो गन्धर्वयुवतीचित्तरञ्जनः ।
प्रतिपत्तिथिजो मन्दवारवारुणऋक्षजः ।। 501

कुम्भराशिभवोऽनुष्टुप्छन्दा लवणसागरः ।
मेरुशैलस्थितो गङ्गातीरस्थष्षड्ज ईरितः ।। 502

(पाटलवर्णः)

ग्रन्थान्तरे सप्तस्वराणां ब्राह्म्यादिमातृकादेवता उक्ताः ।

159B पत्रे षड्जस्वरचित्राणि सन्ति ।

160A

## अथ ऋषभस्वरस्वरूपलक्षणश्लोकाः

ऋषभस्तु स्वरवरो ऋषिवंशसमुद्भवः ।
क्षत्रजस्सप्ततिवयाः पीतवर्णतनुस्तथा ।। 503

शाकद्वीपस्थितश्चैव श्रिताद्भुतरसोत्तमः ।
वेदगोत्रजनिस्सिंहवाहो ब्रह्माधिदैवतः ।। 504

त्रिमुखष्षड्भुजश्चैव षट्कर्णष्षड्विलोचनः ।
त्रिनासिको द्विचरणः सूक्ष्माङ्गः कुन्तधारकः ।। 505

पीतवासाश्चम्पकेष्टः कृष्णागरुविलेपनः ।
पायसान्नो नीलभूषः श्रितखर्जूरपादपः ।। 506

किन्नरस्त्रीवृतस्त्वष्टतिथिभार्गववारजः ।
चित्रर्क्षजस्तुलाराशिर्गायत्रीछन्दसा युतः ।। 507

दधिपाथोधिनिलयो महानसगिरिप्रियः ।
श्रितानघानदीतीरस्सोऽयम् ऋषभ ईरितः ।। 508

(पीतवर्णः)

160A पत्रे ऋषभस्वरचित्राणि सन्ति ।

160B

## अथ गान्धारस्वरस्वरूपलक्षणश्लोकाः

गान्धाराख्यः स्वरवरो देववंशसमुद्भवः ।
वैश्यजातिष्षष्टिवर्षवयाश्चम्पकसन्निभः ।। 509

कुशद्वीपी रौद्ररसश्चन्द्रगोत्रसमन्वितः ।
भेरुण्डवाहनश्चैव सरस्वत्यधिदैवतः ।। 510

द्विमुखश्च चतुर्बाहुः चतुःश्रोत्रसमन्वितः ।
वेदनेत्रो द्विनासश्च द्विपाद्दीर्घोरुदेहभृत् ।। 511

गदायुधो रक्तवस्त्रः पुन्नागकुसुमप्रियः ।
कस्तूरीगन्धलिप्ताङ्गो भक्ष्याशी वज्रभूषणः ।। 512

कदलीवृक्षनिलयो यक्षस्त्रीचुम्बनप्रियः ।
नवमीतिथिजो मन्दवारजो वसुऋक्षजः ।। 513

मृगराशिभवस्त्रिष्टुप्छन्दोवान् मद्यवार्धिजः ।
द्रविणाचलशृङ्गस्थो रसकूपनदीतटे ।। 514

पूर्वोक्तलक्षणैर्युक्तः तृतीयस्स्वरपुङ्गवः ।
गान्धाराख्यस्वरः श्रीमान् नाप्याचारैरुदाहृतः ।। 515

**(चम्पकवर्णः)**

160B पत्रे गान्धारस्वरचित्राणि सन्ति ।

161A

**अथ मध्यमस्वरस्वरूपलक्षणश्लोकाः**

मध्यमाख्यस्वरो देववंशजो द्विजजातिमान् ।
चत्वारिंशद्वयाः प्रोक्तः कुन्दपुष्पसमप्रभः ।। 516

क्रौञ्चद्वीपस्थितश्चैव बीभत्सरससंयुतः ।
विष्णुगोत्रो मृगारूढः शैलपुत्र्यधिदैवतः ।। 517

चतुर्मुखश्चाष्टबाहुः अष्टकर्णोऽष्टलोचनः ।
चतुर्नासो द्विपादश्च समदेहश्च चक्रभृत् ।। 518

नीलवस्त्रो मल्लिपुष्पी हैमवालकगन्धवान् ।
चित्रान्नभोजनप्रीतो वैदूर्यमणिभूषणः ।। 519

जम्बूवृक्षाश्रितः श्रीमान् युक्तकिंपुरुषाङ्गनः ।
तृतीयातिथिजो भानुवासरः पितृऋक्षजः ।। 520

सिंहराशिसमुद्भूतो बृहतीछन्दसा युतः ।
घृताम्बुधिस्थितः पूज्यः सर्वतोभद्रशैलगः ।। 521

अभयाख्यनदीतीरविहारपरमानसः ।
मध्यमाख्यस्वरश्रेष्ठो लक्षणज्ञैरुदाहृतः ।। 522

**(शुभ्रवर्णः)**

161A पत्रे मध्यमस्वरचित्राणि सन्ति ।

161B अथ पञ्चमस्वरस्वरूपलक्षणश्लोकाः

पञ्चमाख्यस्स्वरः पित्र्यवंशजः शूद्रजातिगः ।
त्रिंशद्वयाः कृष्णवर्णः शाल्मलीद्वीपसम्भवः ।। 523

भयानकरसः शम्भुगोत्रजो नक्रवाहनः ।
महाविष्ण्वधिदैवत्यो वेदास्यो वसुबाहुकः ।। 524

नागकर्णो दन्तिनेत्रो युगनासो द्विपादकः ।
पुष्टदेहो भिण्डिवाळायुधाढ्यकरपल्लवः ।। 525

हरिद्वस्त्रसमायुक्तः केतकीपुष्पधारकः ।
गोरोचनविलिप्ताङ्गः पिष्टक्षीरकृताशनः ।। 526

भूषामरकतासक्तो दाडिमीपादपप्रियः ।
नागकन्यारतिप्रीतो द्वादशीसौम्यवारजः ।। 527

उत्तरातारकाजातः कन्याराशिसमुद्भवः ।
सत्पङ्क्तिच्छन्दसायुक्तः इक्षुवार्धिकृताश्रयः ।। 528

सहाश्रिताद्रिवसतिः अनुमत्यापगाप्रियः ।
कीर्तितः शास्त्रकुशलैः पञ्चमस्वरनायकः ।। 529

(कृष्णवर्णः)

161B पत्रे पञ्चमस्वरचित्राणि सन्ति ।

162A अथ धैवतस्वरस्वरूपलक्षणश्लोकाः

धैवताख्यस्वरवरो ऋषिवंशसमुद्भवः ।
क्षत्रजो विंशतिवयाः पीतवर्णसमप्रभः ।। 530

श्वेतद्वीपस्थितो हास्यरसो नारदगोत्रजः ।
शुकवाहनसञ्चारी भास्वत्सूर्याधिदैवतः ।। 531

त्रिमुखो रसबाहुश्च षट्कर्णो ऋतुलोचनः ।
गुणनासो द्विपादश्च दीर्घदेहः शरायुधः ।। 532

चित्रवस्त्रधरः पूज्यः करवीरसुमालिकः ।
श्रीगन्धेनानुलिप्ताङ्गः क्षीरान्नासक्तमानसः ।। 533

गोमेधिकमणिप्रीतो द्राक्षावल्लीकृताश्रयः ।
सुराङ्गनासक्तमनाः सप्तमीगुरुवारजः ।। 534

पूर्वाषाढाभसञ्जातः चापराश्युदितस्तथा ।
उष्णिक्छन्दोयुतश्चैव क्षीरवार्धिकृताश्रयः ।। 535

श्रितमानसशैलेन्द्रः निष्पापातटिनीरतः ।
एवमादिगुणोपेतो धैवतः परिकीर्तितः ।। 536

(पीतवर्णः)

162A पत्रे धैवतस्वरचित्राणि सन्ति ।

162B

## अथ निषादस्वरस्वरूपलक्षणश्लोकाः

निषादाख्यस्वरवरो दैत्यवंशसमुद्भवः ।
वैश्यजातिर्दशवयाः धूम्रवर्णविभासुरः ।। 537

पुष्करद्वीपनिलयः शृङ्गाररसनायकः ।
तुम्बुरोर्गोत्रजः श्रीमान् शारिकावाहनप्रियः ।। 538

गणनाथाधिदैवश्च युग्मास्यः श्रुतिबाहुकः ।
युगकर्णो व्यूहनेत्रो द्विनासश्च द्विपादकः ।। 539

अतिस्थूलतनुः श्रीमान् अङ्कुशायुधपाणिकः ।
क्षौमवस्त्रः पद्मपुष्पो देवदारुविलेपनः ।। 540

शाल्यन्नभक्षणप्रीतः पुष्यरागमणिप्रियः ।
कपित्थवृक्षमूलस्थो दैत्यस्त्रीकुचमर्दनः ।। 541

चतुर्थीभौमवारोत्थो मित्रताराळिराशिजः ।
जगतीच्छन्दसायुक्तः शुद्धोदधिकृताश्रयः ।। 542

मानसोत्तरशैलस्थः श्रितामृतसरोवरः ।
वर्णितो नाट्यतत्त्वज्ञैः निषादः स्वरपुङ्गवः ।। 543

**(धूम्रवर्णः)**

षड्जादिस्वरवर्याणां द्वात्रिंशल्लक्षणैर्युतः ।
वंशादिनिम्नगान्तश्च गायकानां सुखावहः ।। 544

श्रीचामुण्डाकृपापूर्णकृष्णराजविनिर्मितः ।
स्वरचूडामणिर्ग्रन्थो जीयादाचन्द्रतारकम् ।। 545

**स्वरचूडामणिस्सम्पूर्णः**

162B पत्रे निषादस्वरचित्राणि सन्ति ।

163A

## अथ सप्तस्वराणां नामानि

**(अमरकोशे)**

निषादर्षभगान्धारषड्जमध्यमधैवताः ।
पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थितास्स्वराः ।। 546

## अथ सप्तस्वराणां ध्वनीनां सादृश्यमाह

षड्जं मयूरो वदति गावस्त्वृषभभाषिणः ।
अजाविकं तु गान्धारं क्रौञ्चः क्वणति मध्यमम् ।। 547

पुष्पसाधारणे काले पिकः कूजति पञ्चमम् ।
धैवतं हेषते वाजी निषादं बृंहते गजः ।। 548

## अथ षट्त्रिंशद्रागलक्षणानि

### (प्राचीनसङ्गीतरत्नाकररीत्या लिख्यन्ते)

यथोक्तमुमापतिना -

ममैव पञ्चभिर्वक्त्रैः सृष्टाः पूर्वं कुतूहलात् ।
अतः सम्भूय शुद्धास्ते षट्त्रिंशत् सङ्ख्ययोदिताः ।। **549**

**163A/1** तत्र भैरवरागस्वरूपम्

गङ्गाधरः शशिकलातिलकस्त्रिणेत्रः सर्पैर्विभूषिततनुर्गजकृत्तिवासाः ।
भास्वत्त्रिशूलकरवालनृमुण्डधारी शुभ्राम्बरो जयति भैरवरागराजः ।। **550**

एतद्रागलक्षणम् -

धैवतांशग्रहन्यासरिपहीनोऽधमांशकः
भैरवस्स तु विज्ञेयो धैवतादिकमूर्छनः ।। **551**

धैवतो विकृतो यस्मिन्नौडवः परिकीर्तितः ।

मतान्तरे -

देवक्रियामेघरञ्जी कुरञ्जी भैरवस्त्रियः ।। **552**

मूर्च्छना - म प ध नि स रि ग म ।

**163A/2** अथ मध्यमादिरागस्वरूपम्

पत्या सहासं परिरभ्य कामं सुचुम्बितोष्ठी कमलायताक्षी ।
स्वर्णच्छविः कुङ्कुमलिप्तदेहा सा मध्यमादिः कथिता मुनीन्द्रैः ।। **553**

एतद्रागलक्षणम् -

मध्यमादिश्च रागाङ्गग्रहांशन्यासमध्यमा ।
सप्तस्वरैस्तु गातव्या मध्यमादिकमूर्च्छना ।। **554**

सम्पूर्णा कथिता तज्ज्ञै रिधहीना क्वचिन्मता ।। 554A

मूर्च्छना - स रि ग म प ध नि ।

163B/1 **अथ भैरवीरागस्वरूपम्**

स्फटिकरचितपीठे रम्यकैलासशृङ्गे
विकचकमलपत्रैरर्चयन्तं महेशम् ।
करधृतघनवाद्या पीतवर्णायताक्षी
सुकविभिरियमुक्ता भैरवी भैरवस्त्री ।। 555

एतद्रागलक्षणम् -

सम्पूर्णभैरवी ज्ञेया मध्यमग्रामचारिणी ।
कैश्चिदेषा भैरवस्त्री स्वरैर्गेया विचक्षणैः ।। 556

मूर्च्छना - म प ध नि स ग म ।

163B/2 **अथ बङ्गाळीरागस्वरूपम्**

कक्षानिवेशितकरण्डवरा तपस्वि-
न्युद्यत्त्रिशूलपरिमण्डितवामहस्ता ।
भस्मोज्ज्वला निबिडबद्धजटाकलापा
बङ्गाळिकेत्यभिहिता तरुणार्करोचिः ।। 557

एतद्रागलक्षणम् -

बङ्गाळी त्वौडवा ज्ञेया ग्रहांशन्यासषड्जभाक् ।
रिधहीना च विज्ञेया मूर्च्छना प्रथमा मता ।। 558
पूर्णवाङ्गत्रयोपेता कलिनाथेन भाषिता । 558A

मूर्च्छना - स ग म प नि स ।

164A/1

## अथ वराटीरागस्वरूपम्

विनोदयन्ती दयितं सुकेशी सुकङ्कणा चामरचालनेन ।
कर्णे दधाना सुरवृक्षपुष्पं वराङ्गनेयं कथिता वराटी ।। 559

एतद्रागलक्षणम् -

षड्जग्रहांशकन्यासा वराटी कथिता बुधैः ।
प्रथमा मूर्छना यस्याः सम्पूर्णा कीर्तिवर्धनी ।। 560

मूर्च्छना - स रि ग म प ध नि ।

164A/2

## अथ सैन्धवीरागस्वरूपम्

त्रिशूलपाणिः शिवभक्तियुक्ता रक्ताम्बरा धारितबन्धुजीवा ।
प्रचण्डकोपा रसवीरयुक्ता सा सैन्धवी भैरवरागिणीयम् ।। 561

एतद्रागलक्षणम् -

षड्जग्रहांशकन्यासा पूर्णा सैन्धविका मता ।
मूर्छनोत्तरमन्त्राद्या कैश्चिदौडविका मता ।। 562
रिहीना तु भवेन्नित्यं रसे वीरे प्रयुज्यते । 562A

मूर्च्छना - स ग म प ध नि ।

164B/1

## अथ मालवकौशिकरागस्वरूपम्

आरक्तवर्णो धृतगौरयष्टिः वीरस्तु वीरेषु कृतप्रहारः ।
वीरैर्वृतो वीरकपालमालाधारी मतो मालवकौशिकोऽयम् ।। 563

एतद्रागलक्षणम् -

षड्जग्रहांशकन्यासः पूर्णो मालवकौशिकः ।
मूर्च्छना प्रथमा ज्ञेया काकलीस्वरसंयुतः ।। 564

मूर्च्छना - स रि ग म प ध नि ।

164B/2 **अथ तोडीरागस्वरूपम्**

तुषारकुन्दोज्ज्वलदेहयष्टिः काश्मीरकर्पूरविलिप्तदेहा ।
विनोदयन्ती हरिणान् वनान्ते वीणाधरा राजति तोडिकेयम् ।। **565**

एतद्रागलक्षणम् -

मध्यमांशग्रहन्यासा सव्वीरी मूर्च्छना मता ।
सम्पूर्णा कथिता तज्ज्ञैः तोडी श्रीकौशिकी मता ।। **566**
ग्रहांशन्यासषड्जाश्वं केचिदत्र समूचिरे ।। **566A**
मूर्च्छना - म प ध नि स रि ग म ।

165A/1 **अथ कम्भावतीरागस्वरूपम्**

कम्भावती स्यात् सुखदा रसज्ञा तारुण्यलावण्यविभूषिताङ्गी ।
गानप्रिया कोकिलरम्यनादा प्रियंवदा कौशिकरागिणीयम् ।। **567**

एतद्रागलक्षणम् -

धैवतांशग्रहन्यासा षाडवाव्यक्तपञ्चमा ।
कम्भावतीति विज्ञेया मूर्च्छना पौरवी मता ।। **568**
मूर्च्छना - ध नि स रि ग म ।

165A/2 **अथ गौडीरागस्वरूपम्**

निवेशयन्ती श्रवणावतंसम् आम्राङ्कुरं कोकिलनादरम्या ।
श्यामा मधुस्यन्दिसुसूक्ष्मनादा गौडीयमुक्ता किल कोहलेन ।। **569**

एतद्रागलक्षणम् -

ग्रहांशन्यासषड्जा स्याद् रिपहीना सुखप्रदा ।
मूर्च्छना प्रथमा ज्ञेया गौडी सर्वाङ्गसुन्दरी ।। **570**
मूर्च्छना - स ग म ध नि ।

165B/1

## अथ गुण्डक्रियारागस्वरूपम्

शोकाभिभूतनयना परुषं रुदन्ती नम्राननना धरणिधूसरगात्रयष्टिः ।
आमुक्तचारुकबरीप्रियदूरवृत्तिः सङ्कीर्तिता गुणकरी तरुणी कृशाङ्गी ।। 571

एतद्रागलक्षणम् -

रिधहीना गुणकरी त्वौडवा परिकीर्तिता ।
निग्रहांशे तु विन्यासः कैश्चित् षड्जत्रया मता ।। 572
रजनी मूर्च्छना चात्र माळवाश्रयणीति च । 572A

मूर्च्छना - नि स ग म प नि । स ग म प नि स ।

165B/2

## अथ ककुभारागस्वरूपम्

सुपोषिताङ्गी रसमण्डिताङ्गी चन्द्रानना चम्पकदामयुक्ता ।
कटाक्षिणी स्यात्परमा विचित्रा गानेयमुक्ता ककुभा मनोज्ञा ।। 573

एतद्रागलक्षणम् -

धैवतांशग्रहन्यासा सम्पूर्णा ककुभा मता ।
तृतीया मूर्छनोत्पन्ना श्रीरागरसमण्डिता ।। 574

मूर्च्छना - ध नि स रि ग म प ध ।

166A/1

## अथ हिन्दोळरागस्वरूपम्

नितम्बिनीमन्दतरङ्गितासु डौलासु खेलासुखमादधानः ।
तासां कपोलेष्विति कामयुक्तो हिन्दोळरागः कथितो मुनीन्द्रैः ।। 575

एतद्रागलक्षणम् -

हिन्दोळको रिधत्यक्तः सत्रयो गदितो बुधैः ।
मूर्च्छना शुद्धमध्या स्यादौडवः काकलीयुतः ।। 576

मूर्च्छना - स ग म प नि स ।

166A/2 **अथ वेळावलीरागस्वरूपम्**

सङ्केतवीक्षां दयिताय दत्त्वा नितम्बिनी भाषणमङ्गलेषु ।
मुहुः स्मरन्ती स्मरमिष्टदेवं वेलावली नीलसरोजकान्तिः ।। 577

एतद्रागलक्षणम् -

धैवतांशग्रहन्यासपूर्णा वेलावली मता ।
पौरवी मूर्च्छना ज्ञेया रसे वीरे प्रयुज्यते ।। 578

मूर्च्छना - ध नि स रि ग म प ध ।

166B/1 **अथ रामकलिरागस्वरूपम्**

हेमप्रभाभासुरभूषणा च नीलं निचोलं वपुषा वहन्ती ।
कान्ते समीपे पदमाश्रितेऽपि मानोन्नता रामकली मतेयम् ।। 579

एतद्रागलक्षणम् -

षड्जग्रहांशकन्यासा पूर्णा रामकली मता ।
मूर्च्छना प्रथमा ज्ञेया करुणे सा प्रयुज्यते ।। 580
रिधत्यक्ता तु कैश्चिच्च कैश्चित्पञ्चमवर्जिता । 580A

मूर्च्छना - स ग म प नि स । स रि ग म प ध नि स ।

166B/2 **अथ देशाक्षीरागस्वरूपम्**

वीरे रसे व्यञ्जितरोमहर्षं निरुध्य सम्बद्धविलासबाहुः ।
प्रांशुः प्रचण्डः कलितेन्दुरागो देशाक्षिरागः कथितो मुनीन्द्रैः ।। 581

एतद्रागलक्षणम् -

देशाक्षी षाडवा ज्ञेया गत्रयेण विभूषिता ।
ऋषभेण वियुक्ता सा शार्ङ्गदेवेन कीर्तिता ।। 582

मूर्च्छना हारिणाश्वा च सम्पूर्णां केचिदूचिरे । 582A

मूर्च्छना - स म प ध नि स रि ग ।

167A/1

### अथ फलमञ्जरीरागस्वरूपम्

वियोगिनी क्लान्तविशीर्णगात्रा स्रजं वहन्ती वपुषा च शुष्का ।
आश्वास्यमाना प्रियया च सख्या सा धूसराङ्गी फलमञ्जरीयम् ।। 583

एतद्रागलक्षणम् -

पञ्चमांशग्रहन्यासा पूर्णा च फलमञ्जरी ।
हृष्यका मूर्च्छना ज्ञेया रसिकानां सुखप्रदा ।। 584

मूर्च्छना - प ध नि स रि ग म प ।

167A/2

### अथ ललितारागस्वरूपम्

प्रफुल्लसप्तच्छदमाल्यधारी रुचा च गौरोत्पललोचनश्रीः ।
विनिर्गता दैववशात् प्रभाते विलासवेषा ललिता प्रसिद्धा ।। 585

एतद्रागलक्षणम् -

रिपवर्ज्या च ललिता त्वौडवा सत्रयानका ।
मूर्च्छना शुद्धमध्या स्यात्सम्पूर्णां केचिदूचिरे ।। 586
धैवतत्रयसंयुक्ता द्वितीया ललिता मता । 586A

मूर्च्छना - स ग म ध नि स । ध नि स ग म ध ।

167B/1

### अथ प्रदीपकरागस्वरूपम्

बाला रतार्थं प्रविलीनवेषा गृहेऽन्धकारे सुखसम्प्रयुक्ता ।
तस्याः शिरोभूषणरत्नदीपैः लज्जामुदग्रां कृतवान् प्रदीपः ।। 587

एतद्रागलक्षणम् -

षड्जग्रहांशकन्याससम्पूर्णो दीपको मतः ।
मूर्च्छना शुद्धमध्या स्यात् गातव्यो गायने सदा ।। 588

मूर्च्छना - स रि ग म प ध नि स ।

167B/2 **अथ केताररागस्वरूपम्**

जटां दधानः श्रितचन्द्रमौलिः नागोत्तरीयो धृतयोगपट्टः ।
गङ्गाधरो ध्याननिमीलिताक्षः केताररागः कथितस्तपस्वी ।। 589

एतद्रागलक्षणम् -

केतारो रिधहीनस्स्यात् औडवः परिकीर्तितः ।
नित्रया मूर्च्छना मार्गी काकली स्वरमण्डिता ।। 590

मूर्च्छना - नि स ग म प नि ।

168A/1 **अथ कर्नाटरागस्वरूपम्**

कृपाणपाणिर्गजदन्तपत्रमेकं दधद्वामकहस्तकेन ।
संस्तूयमानः सुरचारणौघैः कर्नाटकोऽयं क्षितिपालमूर्तिः ।। 591

एतद्रागलक्षण् -

रिनिषादाधसम्पूर्णा निषादो विकृतो भवेत् ।
मार्गी च मूर्च्छना ज्ञेया कर्नाटोऽयं सुखप्रदः ।। 592

मूर्च्छना - नि स रि ग म प ध नि ।

168A/2 **अथ देशीरागस्वरूपम्**

निद्रालसं सा कपटेन कान्तं विबोधयन्ती सुरतोत्सवाय ।
गौरी मनोज्ञा शिखिपिञ्छवस्त्रा ख्याता च देशी रसपूर्णचित्ता ।। 593

एतद्रागलक्षणम् -

देशी पञ्चमहीना स्याद् ऋषभत्रयसंयुता ।
कपोलललिता ज्ञेया मूर्च्छना विकृतर्षभा ।। 594

मूर्च्छना - रि ग म प ध नि स रि ।

168B/1 **अथ काम्भोजीरागस्वरूपम्**

पीतं वसाना वसनं सुकेशी वने रुदन्ती शुकनाददूना ।
विलोकयन्ती विदिशासु भीता काम्भोजिका कान्तमनुस्मरन्ती ।। 595

एतद्रागलक्षणम् -

धांशन्यासग्रहापूर्णा पौरवी मूर्च्छना मता ।
मल्लारिनिकटे ज्ञेया काम्भोजी सा निगद्यते ।। 596

मूर्च्छना - नि स रि ग म प ध ।

168B/2 **अथ नाटरागस्वरूपम्**

तुरङ्गमस्कन्धनिषण्णबाहुः स्वर्णप्रभश्शोणितशोणगात्रः ।
सङ्ग्रामभूमौ विचरन् प्रतापी नाटोऽयमुक्तः किल शृङ्गमूर्तिः ।। 597

एतद्रागलक्षणम् -

ग्रहांशन्यासषड्जा स्यात् सम्पूर्णा नाटिका मता ।
केचित्तु कथयन्त्येनमृषभत्रयसंयुतम् ।। 598

मूर्च्छना - स रि ग म प ध नि स ।

169A/1 **अथ श्रीरागस्वरूपम्**

अष्टादशाब्दस्मरचारुमूर्तिः धीरोल्लसत्पल्लवकर्णपूरः ।
षड्जादिसेव्योऽरुणवस्त्रधारी श्रीरागराजः क्षितिपालमूर्तिः ।। 599

एतद्रागलक्षणम् -

श्रीरागः स तु विख्यातः सत्रयेण विभूषितः ।
पूर्णः सर्वगुणोपेतो मूर्च्छना प्रथमा मता ।। 600
केचित्तु कथयन्त्येनमृषभत्रयसंयुतम् ।। 600A
मूर्च्छना - स रि ग म प ध नि स रि ।

169A/2 **अथ वसन्तरागस्वरूपम्**

शिखण्डिबर्होच्चयबद्धचूडः कर्णावतंसीकृतशोभनामा ।
इन्दीवरश्यामतनुर्विलासी वसन्तकः स्यादतिमञ्जुलश्रीः ।। 601

एतद्रागलक्षणम् -

वसन्तिका तु सम्पूर्णा सत्रया कथिता बुधैः ।
श्रीरागमूर्च्छनैवात्र गेयगानविचक्षणैः ।। 602
मूर्च्छना - स रि ग म प ध नि स ।

169B/1 **अथ माळवश्रीरागस्वरूपम्**

रक्तोत्पलं हस्ततले च युक्तं विभावयन्ती तनुदेहयष्टिः ।
रसातले वृक्षतले निषण्णा कृतस्मिता सा किल मालवश्रीः ।। 603

एतद्रागलक्षणम् -

मालवश्रीस्तु रागाङ्गपूर्णासत्रयभूषिता ।
मूर्छनोत्तरमन्द्रा स्यात् शृङ्गाररसमण्डिता ।। 604
मूर्च्छना - स ग म प ध नि ध म ग स ।

169B/2 **अथ मालवरागस्वरूपम्**

नितम्बिनीचुम्बितवक्त्रपद्मः समुज्ज्वलत्कुण्डलवान् प्रमत्तः ।
सङ्गीतशालां प्रविशन् प्रदोषे मालाधरो मालवरागराजः ।। 605

एतद्रागलक्षणम् -

मालवस्त्वौडवो ज्ञेयो नित्रयः परिवर्जितः ।
रजनी मूर्च्छना ज्ञेया काकली स्वरमण्डिता ।। 606

मूर्च्छना - स ग म ध नि स ।

170A/1 **अथ सावरीरागस्वरूपम्**

श्रीखण्डशैलशिखरे शुकपक्षवस्त्रा मातङ्गमौक्तिककृतोत्तमहारवल्ली ।
आकृष्य चन्दनतरोरुरगं वहन्ती सासावरी मलयजोज्ज्वलनीलकान्तिः ।। 607

एतद्रागलक्षणम् -

असावरी गरित्यक्ता धग्रहांशकवाडवौ ।
न्यासस्तु धैवतो ज्ञेयः करुणारसनिर्भरः ।। 608

अथवा ककुभोत्पन्ना ख्याता वांशग्रहा मता ।
पञ्चमेनैव रहिता षाडवा च निगद्यते ।। 609

मूर्च्छना - स रि म प ध स नि । ध प म ग रि स ।

170A/2 **अथ धनश्रीरागस्वरूपम्**

दूर्वादलश्यामतनुर्मनोज्ञा कान्तं लिखन्ती चरणेन दूनम् ।
खिन्नं कपोले नयनेऽश्रुबिन्दून्निष्यन्दिनी धूतकचा धनश्रीः ।। 610

एतद्रागलक्षणम् -

सत्रया ऋषभत्यक्ता षाडवा च धनश्रिका ।
मूर्च्छना प्रथमा ज्ञेया रसे वीरे प्रयुज्यते ।। 611

मूर्च्छना - स ग म प नि । स नि ध प म ग रि स ।

170B/1 **अथ मल्लारिरागस्वरूपम्**

गौरी कृशा कोकिलरम्यनादा गीतच्छलेनात्मपतिं स्मरन्ती ।
आदाय वीणां मलिना रुदन्ती मल्लारिका यौवनमानचित्ता ।। **612**

एतद्रागलक्षणम् -

मल्लारी सरिहीना स्यादौडवा पौरवी युता ।
वर्षासु सुखदा ज्ञेया धांशन्यासगृहान्विता ।। **613**

मूर्च्छना - स रि म प ध । स ध प म ग रि स ।

170B/2 **अथ मेघरागस्वरूपम्**

नीलोत्पलाभवपुरिन्दुसमानशीलः पीताम्बरस्तृषितचातकयाच्यमानः ।
पीयूषमन्दहसितो द्रुममध्यवर्ती वीरेषु राजति युवा किल मेघरागः ।। **614**

एतद्रागलक्षणम् -

मेघः पूर्णोदयश्चासौ उत्तरायणमूर्च्छनः ।
विकल्पधैवतो ज्ञेयः शृङ्गाररसपूरितः ।। **615**

मूर्च्छना - स रि ग म प ध नि स । स नि ध प म ग रि स ।

171A/1 **अथ भूपालीरागस्वरूपम्**

गौरद्युतिः कुङ्कुमलिप्तदेहा तुङ्गस्तनी चन्द्रमुखी मनोज्ञा ।
भर्तुः स्मरन्ती विरहेण दूना भूपालिकेयं रसशान्तियुक्ता ।। **616**

एतद्रागलक्षणम् -

षड्जग्रहांशकन्यासा भूपाली कथिता बुधैः ।
मूर्च्छना प्रथमा ज्ञेया सम्पूर्णा शान्तके रसे ।। **617**

मूर्च्छना - स रि ग म प ध नि स । स नि ध प म ग रि स ।

171A/2 **अथ देशकारीरागस्वरूपम्**

भर्त्रा समं केलिरता सुकेशी सर्वाङ्गपूर्णा कमलायताक्षी ।
पीनस्तनी रुक्मतनुः सुपूर्णा चन्द्रानना सैव च देशकारी ।। **618**

एतद्रागलक्षणम् -

देशकारी तु सम्पूर्णा षड्जन्यासग्रहांशका ।
मूर्छना प्रथमा ज्ञेया वराटीमिश्रिता भवेत् ।। **619**

मूर्च्छना - स रि ग म प ध नि स । स नि ध प म ग रि स ।

171B/1 **अथ टक्करागस्वरूपम्**

शय्यासु सुप्तं नळिनीदलानां वियोगिनं वीक्ष्य विषण्णचित्ता ।
सुवर्णवर्णा गृहमागता सा सुभाषयन्ती किल टक्कसंज्ञा ।। **620**

एतद्रागलक्षणम् -

टक्का स्यात्तु त्रिधा षड्जसम्पूर्णा सातिमूर्च्छना ।। **620A**

मूर्च्छना - स रि ग म प ध नि स । स नि ध प म ग रि स ।

171B/2 **अथ घूर्जरीरागस्वरूपम्**

श्यामा सुकेशी मलयद्रुमाणां मृदूल्लसत्पल्लवतल्पमध्ये ।
श्रुतिस्वराणां दधती विभागं तन्त्रीमुखाद्दक्षिणघूर्जरीयम् ।। **621**

एतद्रागलक्षणम् -

ग्रहांशन्यासऋषभसम्पूर्णा घूर्जरी मता ।
सप्तमी मूर्च्छना तस्या भूपाल्या सह मिश्रिता ।। **622**

मूर्च्छना - स रि ग म प ध नि स । स नि ध प म ग रि स ।

## अथ सप्ततालनामस्वरूपलक्षणानि

### (सङ्गीतशास्त्ररीत्या लिख्यन्ते)

### तत्र तालनामानि

ध्रुवो मट्टो रूपकश्च झम्पाख्यस्त्रिपुटस्तथा ।
अट्टतालश्चैकतालस्सप्ततालाः प्रकीर्तिताः ।। 623

ध्रुवतालस्य चतुर्दशाक्षराणां कालः । मट्टतालस्य दशानाम् अक्षराणां कालः । रूपकतालस्य षडक्षराणां कालः । झम्पतालस्य दशाक्षराणां कालः । त्रिपुटतालस्य सप्तानाम् अक्षराणां कालः । अट्टतालस्य चतुर्दशाक्षराणां कालः । एकतालस्य चतुरक्षराणां कालः । आदितालोऽपि अस्मिन्नेव एकताले अन्तर्भवति । एकतालः एव द्विरावृत्य अष्टमात्रात्मको भूत्वा आदितालः इति व्यवह्रियते ।

### अथ तालजातिलक्षणानि कलाश्च सङ्ख्याक्रमश्च

[४]चतुरश्र [३]त्र्यश्र [७]मिश्र [५]खण्ड [९]सङ्कीर्ण जातयः ।
ब्रह्मक्षत्रियविट्शूद्रैस्सङ्कीर्णं जातिपञ्चकम् ।। 624

[४]वेदा[३]ग्नि[७]शैल[५]शर[९]पद्मभवादिसङ्ख्या ।
षट्सङ्ख्यया द्विगुणितद्विगुणप्रकारः ।। 625

व्याख्या - चतुरश्रतालः ब्रह्मजातिः । सः चतुर्गुरुयुक्तः । त्र्यश्रतालः क्षत्रियजातिः। स च त्रिगुरुयुक्तः । मिश्रतालः वैश्यजातिः । स च सप्तगुरुयुक्तः । खण्डतालः शूद्रजातिः । स च पञ्चगुरुयुक्तः । सङ्कीर्णतालः चतसृभिरपि जातिभिर्युक्तः । अत एव सः सङ्कीर्णः इत्युच्यते । स च नवगुरुयुक्तः । तत्तज्जातीयगुरवः षडावृत्या द्विगुणीकृताः तत्तज्जातीयकलाः भवन्ति ।

चतुरश्रनामिकायाः ब्रह्मजातेः द्विगुणो-त्तरवृद्धेः कलासङ्ख्याक्रमः । ४ । ८ । १६ । ३२ । ६४ । १२८ ।

त्र्यश्रनामिकायाः क्षत्रियजातेः द्विगुणोत्तरवृद्धेः कलासङ्ख्यायाः क्रमः । ३ । ६ । १२ । २४ । ४८ । ९६ ।

मिश्रनामिकायाः वैश्यजातेः द्विगुणोत्तरवृद्धेः कलासङ्ख्यायाः क्रमः । ७ । १४ । २८ । ५६ । ११२ । २२४ ।

खण्डनामिकायाः शूद्रजातेः द्विगुणोत्तरवृद्धेः कलासङ्ख्याक्रमः । ५ । १० । २० । ४० । ८० । १६० ।

सङ्कीर्णनामिकायाः चतुर्जातियुक्तायाः सङ्कीर्णजातेः द्विगुणोत्तरवृद्धेः कलासङ्ख्या-क्रमः । ९ । १८ । ३६ । ७२ । १४४ । २८८ ।

इमाः चतुरश्रादिजातीनां कलाः भवन्ति ।

## सङ्कीर्णतालक्रमः लक्षणानि च

जातिभ्रष्टानयस्तालः मार्गतालः प्रकीर्तितः ।
द्रुतद्वन्द्वं विरामान्त्यं प्लुतस्स्यादन्त्यजातिके ।। 626

## अथ तालषडङ्गानि नामानि, देवताश्च

विरामञ्च द्रुतञ्चैव लघुर्गुरुप्लुते तथा ।
काकपादं तथा प्रोक्तं तालाङ्गानि च षड्विधम् ।। 627

[३]द्रुतस्य देवता शम्भुर्लघोर[४]द्रिपतेस्सुता ।
गौरीशिवौ तु [५]गुरुणि [३]प्लुते ब्रह्मादयस्त्रयः ।। 628

[६]हरिर्विरामके चैव शिवः काकपदे तथा । 628A

## अथ तालषडङ्गानाम् आकारः

द्रुतस्तु वलयाकारो लघुरूर्ध्वशराकृतिः ।
गुरुर्वक्रधनुर्ज्ञेयः प्लुतस्य शिखरो गुरुः ।। 629

विरामस्त्वर्धचन्द्रस्स्यात्काकपाद्धंसपादवत् । 629A

172B

## अथ तालषडङ्गानाम् अक्षरकालनिर्णयः

[१]विराम एकाक्षरस्य (स्यात्) कालोऽत्र स्याद्द्वयोर्द्रुतम् ।
[४]लघुश्चतुर्णामिष्टानां कालो [८]गुरुरिति स्मृतः ।। 630
[१२]प्लुतन्तु द्वादशानां स्यात्षोडशानान्तु [१६]काकपात् । 630A

(शार्ङ्गधराख्यग्रन्थेऽप्येवमेव)

एकमात्रो [१=४]लघुः प्रोक्तो [२=५]द्विमात्रश्च गुरुर्भवेत् ।
[३=१२]प्लुतस्त्रिमात्रको ज्ञेयः [४=१६]चतुर्मात्रस्तु काकपात् ।। 631
द्रुतस्स्याद[४=२]र्धमात्रस्तु [१=१]विरामः पादमात्रतः । 631A

## अथ प्रकारान्तरेण दशोत्तरशततालनामानि

(सङ्गीतसङ्ग्रहे शिवतत्त्वरत्नाकरे च)

गीतं वाद्यञ्च नृत्यञ्च सर्वं ताले प्रतिष्ठितम् ।
न तालेन विना किञ्चित्तस्मात्तालस्य मुख्यता ।। 632
तकारात्ताण्डवं प्रोक्तं लकाराल्लास्यमुच्यते ।
तकारः शङ्करः प्रोक्तो लकारः पार्वती स्मृता ।। 633
शिवशक्तिसमायोगात्ताल इत्यभिधीयते ।
न तालेन विना गीतं न वाद्यं तालवर्जितम् ।। 634
न नृत्तं तालहीनं स्याद्रञ्जकस्स ततो मतः ।
अतः परं तालभेदा उदीर्यन्ते यथाक्रमम् ।। 635
शिवपञ्चाननोद्भूताः पञ्चतालाः प्रकीर्तिताः ।
सद्योजातमुखे चञ्चत्पुटतालस्समुद्गतः ।। 636
वामदेवमुखे चाचत्पुटतालस्समुत्थितः ।
अघोरे तु मुखे जातष्षट्पितामत्रिकस्तथा ।। 637

मुखे तत्पुरुषे जातस्सम्पद्वेष्टकसंज्ञकः ।
ईशानाख्यमुखे देवि ताल उद्धट्टसंज्ञकः ।। 638

तस्मादेते पञ्चतालाः प्रशस्ताः पातकापहाः । 638A

## इति तालप्रशंसा

## अथ तालनामानि

[१]चञ्चत्पुटश्चाच[२]त्पुटः षट्पिताम[३]त्रिकस्तथा ।
[४]सम्पद्वेष्टितमुद्धट्ट[५]श्चादि[६]तालश्च [७]दर्पणः ।। 639

[८]चञ्चरी [९]सिंहलीलश्च [१०]कन्दर्प[११]स्सिंहविक्रमः ।
[१२]श्रीरङ्गो [१३]रतिलीलाख्यो [१४]रङ्गतालश्च [१५]कञ्चुकः ।। 640

[१६]प्रत्यङ्गो [१७]गजलीलाख्य[१८]स्त्रिभिन्नो [१९]वीरविक्रमः ।
[२०]हंसलीलो [२१]वर्णभिन्नो [२२]राजचूडामणिस्तथा ।। 641

[२३]वनमाली [२४]वर्णतालस्तथा [२५]रङ्गप्रदीपकः ।
[२६]हंसनाद[२७]स्सिंहनादो [२८]मल्लिकामोदसंज्ञकः ।। 642

तथा [२९]शरभलीलाख्यो [३०]रङ्गाभरण एव च ।
ततस्तु[३१]रङ्गलीलाख्य[३२]स्सिंहनन्दनसंज्ञकः ।। 643

[३३]जयश्री[३४]र्विजयानन्दः [३५]प्रतितालो[३६]द्वितीयकः ।
[३७]मकरन्दः [३८]कीर्तितालो [३९]विजयो [४०]जयमङ्गलः ।। 644

[४१]राजविद्याधरश्चैव [४२]जयतालो [४३]हुडुक्ककः ।
[४४]निस्सारकाभिधश्चैव [४५]त्रिभङ्गी [४६]कोकिलप्रियः ।। 645

[४७]श्रीकीर्तिर्बिन्दु[४८]माली च [४९]समतालश्च [५०]नन्दकः ।
[५१]दुरीक्षणो[५२]मट्टकश्च [५३]ठ्यड्किका [५४]वर्णमाठ्किका ।। 646

[५५]अभिनन्दो [५६]रतिक्रीडा [५७]मल्लतालश्च [५८]दीपकः ।
[५९]अनङ्गलीलो [६०]विषमो [६१]नान्दी [६२]कुन्दो [६३]मुकुन्दकः ।। 647

[६४]सिंहविक्रीडितो [६५]लीला [६६]चतुस्तालश्च [६७]डोम्बलिः ।
[६८]अभङ्गो [६९]राजभेङ्कोलस्तथैव [७०]लघुशेखरः ।। 648

[७१]प्रतापशेखरश्चान्यो [७२]जगझम्प[७३]श्चतुर्मुखः ।
[७४]मुकुलः [७५]प्रतिमठ्यश्च [७६]अभयाख्य[७७]स्तृतीयकः ।। 649

[७८]रङ्गद्योतो [७९]राजतालः [८०]वसन्ततिलको [८१]रतिः ।
173A [८२]कारणाख्यश्च [८३]भगणः [८४]षट्तालो [८५]वर्धनाभिधः ।। 650

ततो [८६]वर्णयतिश्चैव [८७]राजनारायणस्तथा ।
[८८]चतुरश्र[८९]त्र्यश्र[९०]मिश्राः [९१]मदनः [९२]कुम्भतालकः ।। 651

[९३]लक्ष्मीतालश्च [९४]लक्ष्मीशो [९५]पार्वतीलोचनाभिधः ।
[९६]समो [९७]गरुडतालश्च ततः[९८]श्रीनन्दनाभिधः ।। 652

[९९]लीलाविलासतालोऽन्यो [१००]ललिताप्रियसंज्ञकः ।
[१०१]जनकश्चैव [१०२]विषमो [१०३]राजवर्धन [१०४]उत्सवः ।। 653

[१०५]खण्डश्च [१०६]पूर्णकङ्कालो [१०७]सगणो [१०८]मगणस्तथा ।
[१०९]मुद्रिकामठ्यकश्चैव [११०]जयश्चेति प्रकीर्तिताः ।। 654

दशोत्तरशतं तालाः प्रसिद्धा जगतीतले ।। 654A

173A/1

## अथ ध्रुवादिप्रसिद्धसप्ततालस्वरूपादीनि

### (सङ्गीतसङ्ग्रहे प्रसिद्धसङ्गीतरत्नाकरे च)

भानुवारे च पुष्यर्क्षे ध्रुवतालो व्यजायत ।
कर्किराशिर्देवगणोऽप्यजायोनिसमुद्भवः ।। 655

श्वेतवर्णो विशालाक्षः शुभ्रवस्त्रसमावृतः ।
रत्नमाल्यालङ्कृतश्च श्रीङ्कारं बीजमाश्रितः ।। 656

ब्राह्मीशक्तिसमायुक्तः कौण्डिन्यऋषिसंयुतः ।
विष्णुदैवतयुक्तश्चाप्यनुष्टुप्च्छन्दसान्वितः ।। 657

विप्रजातिसमुद्भूतष्षड्जस्वरसमाश्रितः ।
शृङ्गाररसपूर्णश्च प्लक्षद्वीपमुपाश्रितः ।। 658

त्र्यङ्गयुक्तो दिव्यलघु लघुद्वितयसम्मितः ।
इतीन्द्राक्षरकालस्स्यात् चतुरश्रगतिस्तथा ।। 659

स रि ग म । ग रि । स रि ग रि । स रि ग म ।

**इति प्रथमध्रुवतालालङ्कारे चतुर्दशाक्षरकालः ।। १ ।।**

**(श्वेतवर्णः)**

173B/1

## अथ मठ्यतालस्वरूपादीनि

**(सङ्गीतसङ्ग्रहे)**

सोमवारे च हस्तर्क्षे मठ्यतालो व्यजायत ।
कन्याराशिर्देवगणस्तथा महिषयोनिजः ।। 660

श्यामवर्णो विशालाक्षो रक्तवस्त्रसमावृतः ।
मुक्तमालाविभूषश्चाप्योङ्कारं बीजमाश्रितः ।। 661

माहेश्वरीशक्तियुक्तो भरद्वाजर्षिसंश्रितः ।
अग्निदैवतसंयुक्तो बृहतीछन्दसा युतः ।। 662

ब्रह्मजातिश्चर्षभाख्यस्वरो रौद्ररसान्वितः ।
जम्बूद्वीपस्थितस्त्र्यङ्गो लघुद्रुतलघून्श्रितः ।। 663

इत्याशाक्षरकालस्स्यात् चतुरश्रगतिस्तथा ।। 663A

स रि ग रि । स रि । स रि ग म ।। २ ।।

इति द्वितीयमठ्यतालालङ्कारे दशाक्षरकालः ।। २ ।।

(श्यामवर्णः)

174A/1

## अथ रूपकतालस्वरूपादीनि

(सङ्गीतसङ्ग्रहे)

कुजवारे मखाभे च तालोऽजायत रूपकः ।

सिंहराशिभवो रक्षोगणो मूषकयोनिजः ।। 664

रक्तवर्णो भीकराक्षो पीताम्बरसमावृतः ।

विद्रुमस्रग्विभूषाढ्यो रकारं बीजमाश्रितः ।। 665

कौमारीशक्तिसंयुक्तो गौतमर्षिविराजितः ।

भृङ्गिदैवतकस्त्रिष्टुप्च्छन्दा ब्राह्मणजातिजः ।। 666

गान्धारस्वरसंयुक्तः तथा वीररसान्वितः(श्रितः) ।

कुशद्वीपस्थितो द्व्यङ्गो द्रुतेन लघुनाञ्चितः ।। 667

इत्यङ्गाक्षरकालस्स्यात् चतुरश्रगतिस्तथा ।। 667A

स रि । स रि ग म ।

इति तृतीयकरूपकतालालङ्कारे षडक्षरकालः ।। ३ ।।

(रक्तवर्णः)

174A/2

## अथ झम्पतालस्वरूपादीनि

(सङ्गीतसङ्ग्रहे)

बुधे च पूर्वफल्गुन्यां झम्पतालस्समुद्बभौ ।

सिंहराशिर्मर्त्यगणो मूषकीयोनिसम्भवः ।। 668

नीलवर्णः पङ्कजाक्षो विचित्रवसनान्वितः ।
हरिन्मणीमालिकाढ्यो मकारं बीजमाश्रितः ।। 669

वैष्णवीशक्तियुक्तश्च जमदग्निऋषिश्रितः ।
ब्रह्मादिदैवतश्चैव बृहतीच्छन्दसान्वितः ।। 670

वैश्यजातिर्मध्यमाख्यस्स्वरोद्भूतरसान्वितः(ञ्चितः) ।
शाल्मलीद्वीपवासी चाप्यङ्गत्रितयभासुरः ।। 671

समञ्चितश्चैव मिश्रलघुद्रुतविरामकैः ।
इत्याशाक्षरकालस्स्यादयं मिश्रगतिस्स्मृतः ।। 672

स रि ग । स रि सरि । ग । मा ।

इति तुरीयझम्पतालालङ्कारे दशाक्षरकालः ।। ४ ।।

(नीलवर्णः)

174B/1

## अथ त्रिपुटतालस्वरूपादीनि

(सङ्गीतसङ्ग्रहे)

गुरुवारे च रुद्रर्क्षे त्रिपुटस्ताल उद्बभौ ।
युग्मराशिर्मर्त्यगणश्शुनकीयोनिसम्भवः ।। 673

पीतवर्णः पिङ्गलाक्षः स्वर्णांशुकसमावृतः ।
पुष्यरागविभूषाढ्योऽप्यकारं बीजमाश्रितः ।। 674

वाराहीशक्तियुक्तश्च काश्यपर्षिसमन्वितः ।
शिवादिदैवतोऽनुष्टुप्च्छन्दस्कः क्षत्रजातिजः ।। 675

पञ्चमस्वरगो हास्यरसः क्रौञ्चाद्यनूपजः ।
अङ्गत्रययुतत्र्यश्रलघुद्विद्रुतसम्मितः ।। 676

इत्यश्वाक्षरकालस्स्यादयं त्र्यश्रगतिस्स्मृतः ।। 676A

स रि ग । स रि । ग म ।

इति पञ्चमत्रिपुटतालालङ्कारे सप्ताक्षरकालः ।। ५ ।।

(पीतवर्णः)

175A/1

## अथ अट्टतालस्वरूपादीनि

(सङ्गीतसङ्ग्रहे)

भृगुवारे च चित्रर्क्षे चाट्टतालस्समागमत् ।
कन्याराशिभवो रक्षोगणश्शार्दूलयोनिजः ।। 677

स्वर्णवर्णश्श्यामनेत्रो रक्तवर्णांशुकावृतः ।
हीरमालालङ्कृतश्चाप्याकारं बीजमाश्रितः ।। 678

माहेन्द्रीशक्तिकश्चात्रिऋषिष्षण्मुखदैवतः ।
उक्ताच्छन्दः शूद्रजातिः धैवतस्स्वरमाश्रितः ।। 679

भयानकरसश्चार्कद्वीपजोऽङ्गचतुष्कवान् ।
समाश्रितः खण्डलघुद्वन्द्वञ्चैव द्रुतद्वयम् ।। 680

इतीन्द्राक्षरकालस्स्यादयं खण्डगतिस्स्मृतः । 680A

स रि गा । सा रि गा । मा मा ।

इति षष्ठाट्टतालालङ्कारे चतुर्दशाक्षरकालः ।। ६ ।।

(स्वर्णवर्णः)

175A/2

## अथ एकतालस्वरूपादीनि

(सङ्गीतसङ्ग्रहे)

मन्दवारे स्वातिभे च समभूदेकतालकः ।
तुलाराशिर्देवगणो महिषीयोनिसम्भवः ।। 681

धूम्रवर्णो नीलनेत्रश्चित्रवस्त्रसमावृतः ।
नीलमाणिक्यमालाढ्यो यकारं बीजमाश्रितः ।। 682

चामुण्डिकाशक्तियुक्तो वसिष्ठऋषिसंयुतः ।
पवमानाधिदेवश्च गायत्रीच्छन्दसान्वितः ।। 683

तथा ब्राह्मणजातीयो निषादस्वरसङ्गतः ।
बीभत्सरससंयुक्तः पुष्करद्वीपसंस्थितः ।। 684

एकाङ्गेन च सम्पन्नो लघुनैकेन सम्मितः ।
इत्यब्ध्यक्षरकालोऽयं चतुरश्रगतिस्स्मृतः ।। 685

स रि ग म ।

इति सप्तमैकतालालङ्कारे चतुरक्षरकालः ।। ७ ।।

(धूम्रवर्णः)

175B

## अथ तालकालत्रयम्

(सङ्गीतरत्नाकरे)

आदौ विलम्बाख्यकालो द्वितीयो मध्यमाभिधः ।
द्रुतकालस्तृतीयस्तु तालकालास्त्रयस्स्मृताः ।। 686

## अथ तालरागालङ्कारभेदाः

(भरतशास्त्रे)

[1]तालमन्दप्रसन्नाख्यो [2]मन्द्रतालप्रसन्नकः ।
[3]आवर्तकस्सं[4]विधाननामा [5]विधृतनामकः ।। 687

[6]व्यपलोलुकनामा च तथा [7]ढिल्लासिताभिधः ।
एते सप्तविधाः प्रोक्ताः रागालङ्कारनामकाः ।। 688

## अथ मूर्च्छनाभेदनामानि

### (शिवतत्त्वरत्नाकरे)

आदावुत्तर[१]मन्द्राख्या द्वितीया [२]रञ्जनी तथा ।
[३]उत्तरायतनाम्नी च शुद्ध[४]षड्जाभिधा परा ।। 689

पञ्चमी [५]मत्सरीनाम्नी चा[६]श्वक्रान्ता [७]समुद्गता ।
एतास्सप्तसमाख्याताष्षड्जग्रामस्य मूर्च्छनाः ।। 690

[१]सौवीरी [२]हरिणी [३]चाश्वा स्यात्कलो[४]पनताभिधा ।
स्याच्छुद्ध[५]मध्यमार्गी च तथा षष्ठी तु [६]पारवी ।। 691

सप्तमी [७]हृष्यकेत्येताः मध्यमग्राममूर्च्छनाः ।
[१]नन्दा [२]विशाला [३]सुमुखी तुरीया [४]चित्रकाभिधा ।। 692

पञ्चमी स्या[५]च्चित्रवती [६]सुखा[७]लापा च सप्तमी ।
एतास्सप्तविधाः प्रोक्ताः गान्धारग्राममूर्च्छनाः ।। 693

षड्जादिग्रामत्रितये मूर्च्छना एकविंशतिः । 693A

## अथ सप्तस्वरारम्भकश्रुतिभेदाः

### (विवेकचिन्तामणिरीत्या)

[१]निष्कला [२]गह्वरी [३]सर्वव्यापिनी [४]सकलाभिधा ।
तस्तुवांश[५]श्रुति[६]र्गूढा [७]सम्पूर्णा [८]मधुराभिधा ।। 694

[९]एकाक्षरी [१०]भृङ्गजातिः [११]स्वरांशाख्या च [१२]रेणुकी ।
[१३]प्रसन्ना [१४]वर्तकी [१५]पांशनाम्नी च [१६]ललिताभिधा ।। 695

[१७]भाषाङ्ग्याख्याप्य[१८]लङ्कारिण्यभिधा [१९]पूर्णिका तथा ।
[२०]परेङ्गिता [२१]चावलिश्च [२२]रञ्जकीश्रुतिरित्यपि ।। 696

सङ्गीतश्रुतिभेदास्तु द्वाविंशतिरुदाहृताः ।

## अथ तन्त्रीवाद्यभेदाः

### (विवेकचिन्तामणिरीत्या)

[१]परिवादिनिका चैव ततो [२]रावणहस्तकः ।। 697

तत[३]स्तुम्बुरवीणाख्यः [४]सारङ्गी [५]काश्यपी तथा ।

[६]कूर्मकी [७]चित्रिका [८]रुद्रवीणा वै [९]किन्नरी तथा ।। 698

[१०]आकाशवीणा [११]कुब्जक्यैल[१२]कुलाष्टाभिधा परा ।

[१३]विपञ्चिकान्त[१४]र्वीणा च [१५]ब्रह्मवीणाप्य[१६]लावनी ।। 699

[१७]चित्रघोषावली चैव तथा [१८]चकनवल्लकी ।

[१९]तिसती [२०]चरबाबुश्च [२१]स्वरवीणाभिधा परा ।। 700

[२२]अथानादविधा चेति कर्णलोचनसङ्ख्यकाः ।

तन्त्रीवाद्यप्रभेदाः स्युः प्रसिद्धा जगतीतले ।। 701

## अथ वीणासप्ततन्त्रीनामानि

### (सङ्गीतरत्नाकरे)

[१]सारणी [२]पञ्चमी [३]मन्द्रश्चा[४]नुमन्द्रोऽ[५]नुसारिणी ।

[६]पार्श्वसारणुका [७]ठीविर्वीणातन्त्र्यभिधा क्रमात् ।। 702

## अथ तम्बुरतन्त्रीनामभेदाः

### (सङ्गीतरत्नाकरे)

[१]मन्द्रा [२]चैवानुमन्द्रा च [३]तारकं [४]चानुतारकम् ।

[५]पञ्चमं [६]सारणी चैव तथा [७]चैवानुसारणी ।। 703

एवं तुम्बुरवाद्यस्य तन्त्रीनामानि सप्त वै ।। 703A

## अथ तत्तत्करस्थितवीणाविशेषनामानि

### (सङ्गीतसङ्ग्रहे)

विश्वावसोस्तु [1]बृहती तुम्बुरोस्तु [2]कलावती ।
नारदस्यापि [3]महती सरस्वत्यास्तु [4]कच्छपी ।। 704

176A

## अथ गानभेदत्रयम्

### (सङ्गीतरत्नाकरे)

प्रथमं घनगानं च द्वितीयं नयगायनम् ।
तथा तृतीयं देशीयं गानभेदास्त्रयस्स्मृताः ।। 705

## अथ रागरीतित्रयम्

### (सङ्गीतरत्नाकरे)

आदावौडवनामा च द्वितीया षाडवाभिधा ।
सम्पूर्णाख्या तृतीया च त्रिविधा रागरीतयः ।। 706

## अथ सङ्गीतालङ्कारस्थायिनामानि

### (शिवतत्त्वरत्नाकरे)

प्रसन्नाद्याभिधश्चैव प्रसन्नान्त्याभिधस्तथा ।
प्रसन्नाद्यन्तकाभिख्यः क्रमरेचितनामकः ।। 707

प्रसन्नमध्यनामा च प्रस्ताराख्यस्तु षष्ठकः ।
सप्तमस्तु प्रसादाख्यश्चैते सप्तविधास्तथा ।। 708

एवं क्रमेण सङ्गीतालङ्कारस्थायिनो मताः ।। 708A

## अथ सङ्गीताङ्गानि

### (शिवतत्त्वरत्नाकरे)

[१]नाद[२]श्श्रुति[३]स्स्वरो [४]ग्रामो [५]मूर्च्छना च [६]क्रियाङ्गकम् ।
[७]वर्णकोऽ[८]न्तर्भाषिका च [९]भाषाङ्गं [१०]गमकं तथा ।। 709

[११]तानो[१२]जातिश्च [१३]रागाङ्गम् [१४]उपाङ्गं [१५]रागनामकम् ।
[१६]भाषा [१७]विभाषा[१८]लङ्कारः इत्यष्टादशधा स्मृताः ।। 710

सङ्गीताङ्गप्रभेदास्तु प्रतीताः गायकोत्तमैः ।

### अथ गायकसंज्ञाविशेषः

### (सङ्गीतसङ्ग्रहे)

यकलो यमलो बृन्दो गायकास्त्रिविधास्स्मृताः ।। 711

### तत्र यकलगायकलक्षणम्

एको गानं करोत्येव यकलः कथ्यते बुधैः ।

### यमलगायकलक्षणम्

गानं द्वितीयसहितो यमलः परिकीर्तितः ।। 712

### बृन्दगायकलक्षणम्

बहुभिः सहगानन्तु करोति स च बृन्दकः ।

### अथ गायकोत्तमलक्षणानि

### (शिवतत्त्वरत्नाकरे)

प्रवीणश्शब्दविद्यायां तथालङ्कारपद्धतौ ।। 713

तथा शास्त्रेषु कुशलो लोकव्यापारकोविदः ।
गीतशास्त्रेषु निष्णातस्स्वरलक्षणलक्ष्यवित् ।। 714

रागरागाङ्गभाषासु क्रियासु च विचक्षणः ।
कर्ता सर्वप्रबन्धानां धातुमात्राविचक्षणः ।। 715

स्रष्टा च सर्वरीतीनां देशभाषाविशारदः ।
तालमानक्रियादक्षो निर्भयः प्रतिभान्वितः ।। 716

स्वरपाठप्रयोगेषु प्रवीणः पदबन्धने ।
श्रेष्ठो वाग्गेयकारोऽयम् उत्तमोत्तम उच्यते ।। 717

गुणैः कैश्चिद्विहीनोऽपि धातुमात्राविचक्षणः ।
उत्तमस्स तु विज्ञेयो गीतशास्त्रविशारदैः ।। 718

अभ्यासेन विना यत्तु रागाणां रक्तिकारकम् ।
शरीरेण सहोत्पन्नं शारीरं तत्प्रचक्षते ।। 719

चम्पकेषु यथा गन्धः कान्तिर्मुक्ताफलेष्वपि ।
यथेक्षुदण्डे माधुर्यं शारीरे श्राव्यता तथा ।। 720

अन्यजन्मकृताभ्यासाज्ज्ञानयोगाच्छिवार्चनात् ।
शारीरं प्राप्यते पुंभिः अभ्यासान्नैव लभ्यते ।। 721

शिक्षको भावकश्चैव रञ्जको रसिकस्तथा ।
अपरः कुटिकाराख्यः पञ्चधा गायकास्स्मृताः ।। 722

कृतं वाग्गेयकारेण श्रुतं गृह्णात्यनुक्तकम् ।
सविस्तरं सावधानः शिक्षाकारस्स कथ्यते ।। 723

176B रसहानौ रसं धत्ते निर्भावे भावमानयेत् ।
रागं करोति वैदग्ध्यात् भावकस्सोऽभिधीयते ।। 724

श्रोतॄणां हृदयं ज्ञात्वा तेषां चित्तानुसारतः ।
गायन् रञ्जयते यस्तु स रञ्जक इति स्मृतः ।। 725

स्निग्धामात्मश्रुतिं श्रुत्वा भृशमानन्दभाग्भवेत् ।
पुलकाञ्चितसर्वाङ्गो गाता च रसिकस्स्मृतः ।। 726

परगीतानुकारं यो ध्वनिचेष्टादिसंयुतम् ।
सम्यक् प्रकुरुते दक्षः कुटिकारस्स कथ्यते ।। 727

स्वरवर्णं च तालं च युक्तं यो घटयेत्त्रयम् ।
शोभनध्वनिसंयुक्तः सकण्ठो गायको हि सः ।। 728

यथाशास्त्रप्रयोगेण मार्गं देशीयमेव च ।
यो गायति विना दोषैः कथ्यतेऽसौ क्रियापरः ।। 729

### गायकध्वनिगुणाः

वेणुवीणासमैर्नादैः रक्तोऽसौ ध्वनिरिष्यते ।
कोकिलस्वनसङ्काशो मधुरो ध्वनिरुच्यते ।। 730

उच्चस्थानेऽपि यश्श्राव्यः स्निग्धो ध्वनिरसौ मतः ।
अकृशो निबिडो यस्तु स्वरोऽसौ ध्वनिरिष्यते ।। 731

दूरस्थश्श्रूयते यस्तु वृन्दमध्यस्थितोऽपि वा ।
स माधुर्यगुणोपेतः श्राव्यकोऽसौ ध्वनिर्वरः ।। 732

स्थानत्रयेऽपि यश्श्राव्यः शोभनो लक्षणान्वितः ।
ध्वनीनामुत्तमः प्रोक्तो ध्वनिस्स्थानकशोभनम् ।। 733

### गायकमहागुणाः

शारीरञ्च ध्वनिर्मेधाः प्रौढिर्गमककौशलम् ।
तालज्ञानमभीतिश्च गातुस्सप्त महागुणाः ।। 734

## अथ गायकाऽधमनामानि

### (सङ्गीतसङ्ग्रहे)

सन्दष्टदोषी चोद्घुष्टदोषी सीत्कारदोषयुक् ।
अनुनासिकदोषी च करहीनत्वदोषयुक् ।। 735

वितालदोषी कपिलादोषी कम्पितदोषयुक् ।
करालदोषयुक्काकस्वरदोषयुतस्तथा ।। 736

विनिमीलितदोषी च स्थानभ्रंशाच्च दोषयुक् ।
अव्यवस्थितदोषी च एकोनाभिधदोषयुक् ।। 737

शङ्किताभिधदोषी च तथा साम्बकदोषयुक् ।
प्रसारदोषी चाव्यक्तदोषी मिश्रकदोषयुक् ।। 738

अपस्वराख्यदोषी च भीतिदोषसमन्वितः ।
बकिदोषी च विरसदोषी चान्यकदोषयुक् ।। 739

वक्रीदोषी चेति पञ्चविंशतिर्गायकाधमाः । 739A

## एतेषां लक्षणानि

### (सङ्गीतसङ्ग्रहे)

सन्दश्य दशनान् सर्वांश्चरन्निव पदावलिम् ।
यो गायति स विज्ञेयः सन्दष्टो गीतनाशकः ।। १ ।। 740

विरहादौ वीररसं व्यञ्जयन्मत्तभावकः ।
उद्घुष्यति क्रूरतरं उद्घुष्टोऽसौ निगद्यते ।। २ ।। 741

मुहुरुच्छ्वासनिश्वाससीत्कारपरिगर्जितैः ।
कासैर्निष्ठ्यूतिसंयुक्तः सीत्कारी गायकाधमः ।। ३ ।। 742

नासाद्वारगतैर्नादैः कठोराव्यक्तवर्णकम् ।
गानं करोति यो मर्त्यः कथ्यते सोऽनुनासिकः ।। ४ ।। **743**

विहस्तः कम्पयुक्तश्च प्रोन्नमय्य निजं शिरः ।
ऊर्ध्वं विलोकयन्गायेत् करहीनस्स गद्यते ।। ५ ।। **744**

**177A** तालकालक्रियामानमज्ञात्वा लयवर्जितम् ।
यो गायति स तु प्रोक्तो वितालो गायकाधमः ।। ६ ।। **745**

वेगेन स्वरसन्दर्भक्रमम् अज्ञानतस्तु यः ।
त्यक्त्वा न्यूनाधिकं गायेत्कपिलो गायकाधमः ।। ७ ।। **746**

त्वरया गानकाले तु कम्पयन्वै निजां तनुम् ।
विकृतं यस्तु गायेद्वै कम्पितो गायकाधमः ।। ८ ।। **747**

व्यादाय वदनं यस्तु करालध्वनिना युतः ।
गीतं गायति विज्ञेयः कराली स निराकृतः ।। ९ ।। **748**

काकस्वरसमो यस्य स्वरः कर्णकठोरकः ।
गानकाले भवेदुक्तस्स काकी निन्दितो भृशम् ।। १० ।। **749**

निमील्य नयनद्वन्द्वम् अपश्यन्नग्रतः स्थितान् ।
गायेन्निन्द्यतमं यस्तु विज्ञेयस्स निमीलितः ।। ११ ।। **750**

श्रुतिहीनं स्वरं कुर्वन् अप्राप्तस्थानकत्रयः ।
स्थानभ्रष्टस्स विज्ञेयः गायकेष्वतिनिन्दितः ।। १२ ।। **751**

व्यवस्थितन्तु यद्गीतं यः करोत्यव्यवस्थितम् ।
अव्यवस्थितनामासौ निन्दितो गायको बुधैः ।। १३ ।। **752**

कुर्वन्नर्धविहीनन्तु पद्यवर्णपदादिकम् ।
यो गायति स एकोनः कथ्यते गायकाधमः ।। १४ ।। **753**

कम्पमानो ध्वनिर्यस्य शङ्कया गीतिकर्मणि ।
शङ्कितस्स तु विज्ञेयो निन्दितो ध्वनिकोविदैः ।। १५ ।। 754

घनतुल्यध्वनिर्गायन् ऊर्ध्ववक्त्रोऽक्षरैस्स्खलन् ।
हीनस्वरेण संयुक्तः स साम्बक इति स्मृतः ।। १६ ।। 755

प्रसार्य गात्रं हस्तौ च गीते चाप्यविचक्षणः ।
गायन्मानाधिकं यस्तु प्रसारीति स गद्यते ।। १७ ।। 756

गद्गदध्वनिना युक्तोऽप्यव्यक्तं यस्तु गायति ।
अव्यक्त इति सम्प्रोक्तो गायकैर्निन्दितो हि सः ।। १८ ।। 757

उक्तमार्गमतिक्रम्य घनतानेषु कल्पनम् ।
कृत्वा गायति यो मर्त्यो मिश्रको गायकाधमः ।। १९ ।। 758

कृत्वा स्वरविपर्यासं गानावसर एव यः ।
मर्त्यो गायति स ज्ञेयः अपस्वर इतीरितः ।। २० ।। 759

न्यूनाधिका श्रुतिर्यस्य षड्जादिषु विभाव्यते ।
स भीतो निन्दितो ज्ञेयो गायको रागनाशकः ।। २१ ।। 760

कृत्वा तु तुम्बिकाकारं फुल्लगल्लयुगं नरः ।
यो गायति बकी नामा गायकाधम उच्यते ।। २२ ।। 761

शृङ्गारवीरप्रमुखैः रसैश्च परिवर्जितम् ।
यो गायति स वै ज्ञेयो विरसो गायकाधमः ।। २३ ।। 762

ग्रीवायां यस्य फाले च सिराबन्धः प्रदृश्यते ।
घोणोत्फुल्लारुणे नेत्रे सोऽन्यको गायकाधमः ।। २४ ।। 763

अत्यर्धं कन्धरां वक्रां कृत्वा गीतञ्च गायते ।
समं गातुं न जानाति स वक्री कथ्यतेऽधमः ।। २५ ।। 764

## अथ सामगाचार्याः

### (सामवेदे प्रभावल्याञ्च)

[१]राणायनिस्सात्य[२]मुग्रिः [३]कुर्वासा [४]भागुरिस्तथा ।
[५]गौर्गुण्डी [६]गर्गसावर्णिः भगवा[७]नौपमन्यवः ।। 765

[८]कालारो [९]वर्षगण्यश्च [१०]शालिहोत्रश्च [११]जैमिनिः ।
तथा [१२]कुधुमिनिश्चैव तथा [१३]गौर्गुलवीति च ।। 766

177B त्रयोदशविधैश्चैवं सामगाचार्य उत्तमैः ।
परिज्ञेयस्सामवेदे सामगानपरायणैः ।। 767

## अथ एकोनपञ्चाशत्तानाः

### (अस्मत्कृतसङ्ख्यारत्नकोशव्याख्याप्रभावल्याम्)

[१]सर्वतोभद्रतानश्च [२]ब्रह्मयज्ञाभिधः परः ।
तथा[३]श्वक्रान्तततानश्च [४]प्राजापत्याभिधस्तथा ।। 768

[५]सावित्र्याख्यो [६]नागयक्षतानस्सर्पाय[७]नाख्यकः ।
[८]बर्हितानश्चाभ्यु[९]दयतानस्सभरि[१०]तानकः ।। 769

[११]सौभाग्यक्रतुतानश्च [१२]वशीकरणतानकः ।
[१३]त्रैलोक्यमोहनाभिख्यः [१४]कठाख्यस्सेन[१५]नामकः ।। 770

[१६]गोदोहनाख्यो [१७]वज्राख्यो [१८]वैनतेयाभिधः परः ।
[१९]अग्निष्टोमाभिधो [२०]वाजपेयाख्यश्चेषु[२१]नामकः ।। 771

[२२]कामदाख्य[२३]श्शङ्खचूडतानोऽव[२४]भृथनामकः ।
[२५]शान्तिकृन्नामक[२६]स्सूर्यक्रान्ताख्यो [२७]भैरवाभिधः ।। 772

[२८]इडातानो [२९]रथक्रान्तततानः [३०]पुष्पिकृदाह्वयः ।
[३१]पौण्डरीकाभिधो [३२]राजसूयाख्यो [३३]रात्रिनामकः ।। 773

[३४]महाव्रताख्य[३५]श्चित्राख्यः [३६]सौत्रामण्यभिधः परः ।
[३७]अश्वमेधाभिधो [३८]विष्णुक्रान्ताख्यः [३९]सोमनामकः ।। 774

[४०]उच्चाटनाख्यश्च [४१]बहुवर्णाख्या[४२]ङ्गिरसाभिधौ ।
[४३]अश्वप्रतिग्रहाख्यश्च [४४]पौर्णमास्यभिधस्तथा ।। 775

[४५]दीक्षातानो [४६]गजक्रान्ततानः [४७]सिद्धिकृदाह्वयः ।
[४८]रौद्राख्यो [४९]वीरकन्दर्पकुशतानसमाह्वयः ।। 776

इति तानस्तथैकोनपञ्चाशद्विध ईरितः ।
ज्ञेयो बुधैश्च सङ्गीतरत्नाकरनिबन्धने ।। 777

## अथ भरताचार्यनामानि

### (भरतशास्त्रसङ्ग्रहे)

[१]सदाशिव[२]श्शिवो [३]ब्रह्मा [४]भरतः [५]कश्यपोऽ[६]र्जुनः ।
[७]विशाखिलो [८]दत्तिलश्च [९]तुम्बुरु[१०]र्नारदो [११]गुरुः ।। 778

[१२]आञ्जनेयो [१३]मातृगुप्तो [१४]रावणो [१५]नन्दिकेश्वरः ।
[१६]कम्बलोऽ[१७]श्वतरो[१८]रम्भा [१९]शार्दूलो [२०]भट्ट[२१]कोहलौ ।। 779

[२२]आदिदेवश्चा[२३]र्चिदेवो [२४]मतङ्गो [२५]यष्टि[२६]शङ्करौ ।
[२७]विश्वावसु[२८]श्चित्रसेनः [२९]उद्भटो [३०]लोलटाभिधः ।। 780

[३१]दुर्गाशक्ति[३२]स्सोमनाथो [३३]रुद्रसेनश्च [३४]भोजराट् ।
[३५]भारतीयः [३६]कीर्तिधरो [३७]जगदेकमहीपतिः ।। 781

[३८]व्याख्याकरश्चा[३९]भिनवगुप्तो वै [४०]पाकशासनः ।। 781A

## अथ नाट्यवर्ज्यस्त्रीलक्षणानि

(भरतसङ्ग्रहे)

[१]अतिस्थूला च [२]पुष्पाक्षी [३]स्वरहीना च [४]वामना ।
[५]लम्बस्तनी चाति[६]कृशा [७]लम्बोष्ठी [८]दीर्घदन्तिनी ।। 782

[९]कुब्जा[१०]त्युच्चा [११]केशहीना [१२]विरूपा [१३]चपलात्मिका ।
[१४]रोगिणी [१५]तुन्दिला [१६]कृष्णाप्य[१७]तिरक्ताप्य[१८]पस्वरा ।। 783

[१९]गानाभ्यासविहीना च [२०]कुण्डिलीपरिवर्जिता ।
[२१]कृष्णाङ्गुलिः [२२]पिङ्गकेशी [२३]चाक्षरज्ञानवर्जिता ।। 784

[२४]वामहस्तस्वभावा च नाट्यवर्ज्यस्त्रियो मताः । 784A

## अथ नाट्ययोग्यस्त्रीलक्षणानि

(शिवतत्त्वरत्नाकरे भरते च)

[१]सुविभक्ताङ्गवैचित्र्या [२]घनस्तननितम्बिनी ।
नृत्तवादित्रगीतेषु [३]कुशला [४]दीर्घलोचना ।। 785

[५]तारतम्यविशेषज्ञा [६]रूपौदार्यगुणान्विता ।
[७]जितश्रमा [८]बहुप्राज्ञा [९]सुशिक्षितगतिक्रमा ।। 786

[१०]नाट्याङ्गलक्षणज्ञा च सततं [११]प्रियवादिनी ।
178A [१२]उक्तिप्रत्युक्तिचतुरा [१३]रञ्जकत्वगुणान्विता ।। 787

[१४]नातिदीर्घा [१५]नातिह्रस्वाप्य[१६]रोगा [१७]सुमुखी तथा ।
[१८]नातिस्थूला [१९]नातिकृशा [२०]रागसम्पत्समन्विता ।। 788

[२१]सम्यग्भूषणभूषाढ्या मण्डलेषु [२२]विचक्षणा ।
गुरुदेवद्विजातीनां [२३]सपर्यासक्तमानसा ।। 789

२४मनोधर्मवती २५तालभेदज्ञा २६निर्मलाङ्गिनी ।
२७रसाभिनयभावादिकुशला च २८विचक्षणा ।। 790

एवं गुणयुता नारी नाट्ययोग्या च रञ्जिका । 790A

### अथ नर्तनसूत्रधारलक्षणम्

**(भरते)**

सर्वप्रयोगकुशलः सुरेखो विजितेन्द्रियः ।
प्राज्ञस्तालयाभिज्ञो गीतशास्त्रेषु कोविदः ।। 791

पात्रसङ्क्रमणोपायकुशलः सत्कुलोद्भवः ।
चार्वङ्गहारनिपुणः मण्डलेषु विचक्षणः ।। 792

नानादेशीयनृत्यज्ञो मत्सरेण विवर्जितः ।
आतोद्यभेदनिपुणो नानाभिनयकोविदः ।। 793

एवंविधगुणो नाट्ये सूत्रधारः प्रकीर्तितः । 793A

### अथ रङ्गस्थले पात्राणां मेलनक्रमः

**(भरते)**

रङ्गमध्ये स्थिते पात्रे वामभागे नटोत्तमः ।
दक्षिणे तालधारी तु पार्श्वयोस्तु मृदङ्गवान् ।। 794

तयोर्मध्ये गीतकारी तत्पृष्ठे श्रुतिमान् भवेत् ।
लास्यारम्भे तु पात्राणां रङ्गस्थाने स्थितिक्रमः ।। 795

### अथ नाट्यारम्भे पूर्वरङ्गक्रमः

**(नन्दिभरते)**

सूत्रधारमनुसृत्य गायकाः तालमर्दलधराः श्रुतिप्रदाः ।
तेऽपि भाविनटनानुकूलतः पूर्वरङ्गमुपघोषन्त्यथ ।। 796

## अथ नाट्यारम्भकाले वारभेदेन पुष्पाञ्जलियोग्यपुष्पभेदाः

**(भरतशास्त्रे)**

भानुवारे [१]जपापुष्पं सोमे [२]पुन्नागपुष्पकम् ।
भौमवारे [३]द्रोणपुष्पं [४]केतकीकुसुमं बुधे ।। **797**

गुरौ [५]चम्पकपुष्पं च भृगौ [६]जात्याख्यपुष्पकम् ।
[७]बकुलं मन्दवारे च रव्यादिषु यथाक्रमम् ।। **798**

पुष्पाञ्जलेस्तु योग्यानि नर्तकीहस्तसम्पुटे ।

## अथ नाट्याङ्गकार्याणि

**(भरते)**

[१]पीठकं [२]कूटमानं च [३]प्रचुरं च [४]कलासिकम् ।। 799

[५]कैयुडुश्च [६]मरालश्चाप्य[७]ङ्गरेखा च [८]झक्किणी ।
[९]कडकट्टु[१०]र्जोगिणी च [११]चारमानञ्च [१२]मण्डलम् ।। 800

[१३]चालीयं [१४]नृत्तचारी च [१५]शब्दं [१६]कौतं च [१७]नत्रकम् ।
[१८]नृत्तञ्च [१९]तुरुपु[२०]र्नेरुः [२१]वसराभिधमित्यपि ।। 801

एकविंशतिसङ्ख्यानि नाट्याङ्गानि महीतले ।

## अथ नाट्यचेष्टाभेदः

**(अस्मत्कृतसङ्ख्यारत्नकोशव्याख्याप्रभावल्याम्)**

[१]विद्युद्भ्रान्तिर[२]पक्षेपः [३]पुरक्षेपोऽ[४]ङ्घ्रिताडिता ।। 802

[५]दण्डपात[६]स्सूच्य[७]विद्धा [८]भ्रमर्या[९]न्दोलितं तथा ।
[१०]चमरी [११]चोर्ध्वजानुश्च [१२]विक्षेपो [१३]हरिणप्लुतम् ।। 803

178B [१४]जङ्घालं [१५]घनमालातिः [१६]जङ्घावर्तक इत्यपि ।
नाट्यचेष्टाः षोडशधा भरते समुदाहृताः ।। 804

## अथ नाट्याभिनययोग्याङ्गानि

(शिवतत्त्वरत्नाकरे)

[१]शिरः [२]करः [३]कटि[४]र्वक्षः [५]पार्श्व[६]श्चरण इत्यपि ।
नाट्याभिनययोग्यानि षडङ्गानि क्रमेण तु ।। **805**

## अथ नाट्योपाङ्गानि

(शिवतत्त्वरत्नाकरे)

[१]भ्रुवौ [२]नेत्रे [३]नासिका च [४]चुबुकं [५]चाधरं तथा ।
[६]गण्डस्थलं चेति नाट्योपाङ्गानि षडिमानि वै ।। **806**

## अथ नाट्यप्रत्यङ्गानि

(शिवतत्त्वरत्नाकरे)

[१]ग्रीवा [२]बाहु[३]श्चोदरं च [४]ऊरु[५]र्जङ्घा च [६]पृष्ठकम् ।
षट्सङ्ख्यानि प्रवक्ष्यन्ते नाट्यप्रत्यङ्गकानि तु ।। **807**

## अथ नर्तकीस्थानकभेदाः

(भरतशास्त्रे)

[१]आयतस्थानकं चावहिताख्यं [२]स्थानकं तथा ।
[३]अश्वक्रान्ताभिधं चैव स्थानकं [४]चागतागतम् ।। **808**

[५]वलितस्थानकं चैव [६]मोटकस्थानकं ततः ।
[७]विनिवर्तितकं चेति स्थानकानि च सप्त वै ।। **809**

## अथ नर्तकीपादचारिगतिभेदाः

(भरते सङ्गीतरत्नाकरे च)

[१]गतिर्वलनचार्याख्या [२]गतिश्चङ्क्रमणाभिधा ।
तथा [३]सरणचारी च गतिः [४]कुट्टनचारिका ।। **810**

तथा [५]लुण्ठितचारी च [६]गतिर्लोलकचारिका ।
गतिर्विषमसञ्चार[७]चार्याख्या सप्तमी मता ।। **811**

नर्तकीपादचार्याख्या गतिस्सप्तविधाभिधा । **811A**

### अथ कुण्डल्याख्यनाट्यगतिविशेषनामानि

(भरते)

### वालवरसेक्रमः

आदौ [१]हंसगतिश्चैव [२]मयूरगतिरित्यपि ।
ततस्तु [३]लावुकगतिः [४]आतापिगतिरित्यपि ।। 812

अन्या च [५]कुक्कुटगतिः ततो [६]गजगतिस्तथा ।
अन्या त्वश्वगतिः सप्तविधा नाट्यगतिर्मता ।। 813

### अथ नर्तकीसंयुतहस्तभेदाः

(नन्दिभरते)

[१]चतुरश्रः [२]पुष्पपुटहस्तश्च [३]स्वस्तिकोऽ[४]ञ्जलिः ।
[५]कर्तरीस्वस्तिकश्चैव [६]डोलाख्य[७]स्तिलकाभिधः ।। 814

[८]वर्धमानस्त्व[९]वहितः [१०]पताकः [११]कलशाभिधः ।
[१२]उत्तानवञ्चितश्चैव [१३]पक्षवञ्चित[१४]वैष्णवम् ।। 815

[१५]नागबद्धस्तथो[१६]त्सङ्गः चैवं भरतशास्त्रके ।
तथैव षोडशविधः संयुतो हस्त ईरितः ।। 816

### अथ नर्तक्याः असंयुतहस्तभेदाः

(नन्दिभरते)

[१]पताक[२]स्त्रिपताको[३]र्ध्वपताकः [४]कर्तरीमुखः ।
[५]मयूराख्योऽ[६]र्धचन्द्रस्स्यात् [७]अरालः [८]शुकतुण्डकः ।। 817

[९]मुष्टिश्च [१०]शिखराभिख्यः [११]कपित्थः [१२]कटकामुखः ।
[१३]सूचीहस्तः [१४]पद्मकोशः [१५]बाण[१६]स्सर्पशिरास्तथा ।। 818

[१७]मृगशीर्ष[१८]स्सिंहमुखो [१९]लाङ्गूल[२०]श्चालपल्लवः ।
[२१]चतुरो [२२]भ्रमरश्चैव [२३]हंसास्यो [२४]हंसपक्षकः ।। 819

[२५]सन्दंशो [२६]मुकलश्चैव [२७]ताम्रचूड[२८]स्त्रिशूलकः ।
[२९]ऊर्णनाभिश्चेति नाट्ये हस्ताः प्रोक्तास्त्वसंयुताः ।। 820

## अथ नर्तक्यभिनयदृष्टिभेदाः

### (भरतसङ्ग्रहे)

[१]समा प्रलोकि[२]ताख्या च [३]स्निग्धा [४]शृङ्गारबन्धुरा ।
[५]उल्लोकिता[६]द्भुता [७]तृप्ता [८]विस्मिता [९]करुणान्विता ।। 821

179A [१०]भयानका [११]विषण्णा च [१२]साची [१३]वीररसान्विता ।
[१४]द्रुता [१५]रौद्रा [१६]दूरदृष्टिः [१७]इङ्गिताख्या [१८]विलोकिता ।। 822

[१९]वितर्किता [२०]शङ्किता चाप्य[२१]भितप्ता[२२]वलोकिता ।
[२३]शून्या [२४]हृष्टा [२५]तथोग्रा च [२६]विभ्रान्ता [२७]चैव मीलिता ।। 823

[२८]शान्ता च [२९]सूचनादृष्टिः [३०]लज्जिता [३१]मलिना तथा ।
[३२]त्रस्ता [३३]म्लाना च [३४]मुकुला[३५]कुञ्चिता चैव [३६]विप्लुता ।। 824

[३७]अनुवृत्ता[३८]र्धमुकुला [३९]जिह्माख्या[४०]काशनामिका ।
[४१]विकोशा [४२]मदिरा चैव [४३]हृद्या च [४४]ललिताभिधा ।। 825

चतुश्चत्वारिंशदेताः नर्तकीदृष्टयो मताः । 825A

## अथ शृङ्गारचेष्टानामानि

### (अस्मत्कृतसङ्ख्यारत्नकोशव्याख्याप्रभावल्याम्)

[१]हावो[२]भावश्च [३]हेला च [४]माधुर्यं [५]किलकिञ्चितम् ।
[६]लीला [७]धैर्यं [८]विलासश्च [९]विच्छित्ति[१०]र्विभ्रमस्तथा ।। 826
[११]मोट्टायितं [१२]कुट्टिमितं [१३]ललितं च [१४]कुतूहलम् ।
[१५]बिब्बोक[१६]श्चकितं [१७]हासो [१८]विकृतं चेति कीर्तिताः ।। 827
काव्यप्रकाशे शृङ्गारचेष्टाष्टादशधा स्फुटम् । 827A

## अथ मृगाभिनयनामानि

### (पूर्वोक्तप्रभावल्याम्)

[१]शरभाभिनयश्चासि[२]धेनुकाभिनयस्तथा ।
[३]करिण्यभिनयो [४]नूँत्लगजाभिनय [५]आश्वकः ।। 828
[६]महाव्याघ्रश्च [७]पुरुषमृगाभिनय[८]वानरौ ।
[९]बैडालो [१०]व्याघ्र्यभिनयः [११]कामधैनव[१२]दैग्गजौ ।। 829
[१३]वाराहाभिनयस्सर्व[१४]मृगाभिनय इत्यपि ।
चतुर्दशविधो नाट्ये मृगाभिनय ईरितः ।। 830

## अथ सुपर्ववाद्यनामानि

### (पूर्वोक्तप्रभावल्याम्)

[१]झर्झरी [२]झल्लरी [३]गर्भी[४]भेरी च [५]पटहस्तथा ।
[६]काहली च [७]विषाणञ्च [८]घण्टा[९]तालश्च [१०]डिण्डिमः ।। 831
[११]मर्दलो [१२]वीरण[१३]श्शङ्खो [१४]गोमुखी [१५]मुरली तथा ।
[१६]नागस्वरश्च [१७]पणवः [१८]चित्रिणी [१९]जयकाहली ।। 832

सुवर्णवाद्यन्तु नवदशधा परिकीर्तितम् ।
श्रीनारायणसंवादे विज्ञेयं विबुधोत्तमैः ।। 833

## अथ नर्तकीपादकिङ्किणीलक्षणम्

(भरतशास्त्रसङ्ग्रहे)

सार्धैकयवमानं स्यादोतप्रोतं तथैव च ।
तन्मध्ये जिम्हिका प्रोक्ता यवैकपरिमाणकः ।। 834

वलयाकारसम्पन्नमेवं लक्षणसंयुतम् ।
तदादौ रन्ध्रसम्पन्ना किङ्किणीत्यभिधीयते ।। 835

किङ्किण्याञ्च चतुष्कोणं तदन्ते स्याच्च गोलकम् ।
सप्तकोणं चतुष्कोणं चैककोणं तथैव च ।। 836

सप्तकोणं चैककोणं रम्भाद्यासु प्रदृश्यते ।
किङ्किणीं कनकेनाथ ताम्रेण रजतेन वा ।। 837

कांस्येन वा यथाशक्ति कुर्यात्तु घुटिकान्तराम् ।
सुस्वराश्च सुरूपाश्च सूक्ष्माः नक्षत्रसन्निभाः ।। 838

बद्धाश्च नीलसूत्रेण ग्रन्थिभिश्चापि पादयोः ।
शतं वा द्विशतं वापि बध्नीयान्नाट्यकर्मणि ।। 839

किङ्किणीवदने वाणी तन्मध्ये कमलालया ।
179B तदादौ गिरिजा प्रोक्ता शङ्करानन्दकारिणी ।। 840

तस्मात्सर्वप्रयत्नेन वाद्ये नृत्ये विशेषतः ।
मणिबन्धे पादमूले धारयेच्छास्त्रकोविदः ।। 841

## किङ्किणीबन्धनक्रमः

तदादौ प्रार्थना -

वाणीलक्ष्मीशैलसुतादेवतां नीलसूत्रिकाम् ।
शतग्रन्थिसमायुक्तां किङ्किणीं प्रणमाम्यहम् ।। **842**

किङ्किणीस्तु समं बध्वा द्विशतग्रन्थिसंयुताः ।
तदादौ देवतां ध्यात्वा नत्वा रङ्गं प्रवेशयेत् ।। **843**

## अथ मृदङ्गनिर्माणक्रमः लक्षणं च

### (शिवतत्त्वरत्नाकरे)

मर्दलाभिधवाद्यस्य नृत्यविद्योपयोगिनः ।
स्वरूपं वर्ण्यते सम्यगिदानीं शास्त्रसम्मतम् ।। 844

चन्दनन्तु द्विजातीनां क्षत्राणां रक्तचन्दनम् ।
खदिरो वैश्यजातीनाम् इतरेषां तथेतरे ।। 845

नीरसौषरभूजाताः जीर्णाः वाताहतोत्तराः ।
निर्भिन्नाः परितो गर्भे वृक्षा वर्ज्यास्तु मर्दले ।। 846

मेदोन्मितं जराक्रान्तं छिन्नं काकमुखाहतम् ।
अग्निधूमहतं जीर्णं वर्ज्यं चर्म च मर्दले ।। 847

निर्दोषभाजकाष्ठेन मृदङ्गः क्रियते वरः ।
अङ्गुलैरेकविंशत्या कृतायामन्तरापृथुः ।। 848

चतुर्दशाङ्गुलं वामं वक्त्रमस्य प्रकल्पयेत् ।
त्रयोदशाङ्गुलं दक्षं पिण्डं त्वर्धाङ्गुलं भवेत् ।। 849

एकाङ्गुलाधिके कुर्यात् वक्त्रयोश्चर्मणी घने ।
चत्वारिंशच्च रन्ध्राणि तयोः प्रान्ते पृथक् पृथक् ।। 850

व्यवधानं भवेदेषां अन्तराङ्गुलमङ्गुलम् ।
सव्येऽनुक्रमयोगेन रन्ध्रकेषु क्षिपेत् क्रमात् ।। 851

नीविकां कर्करमयीं तेषु रन्ध्रेषु निक्षिपेत् ।
मृदङ्गमध्ये बध्नीयात् त्रिभिस्सेवनकैस्तथा ।। 852

कुर्याद्गोमूत्रिकाबन्धक्रमं बन्धद्वयेन च ।
कुण्डलीद्वितयं प्रान्ते कक्ष्याबन्धाय कल्पते ।। 853

कक्ष्यां निवेश्य तत्रैव सव्ये द्विगुणितां नयेत् ।
साङ्गुलद्वितयं प्रान्ते बन्धनं स्यान्निरन्तरम् ।। 854

भक्तेन भस्ममिश्रेण मर्दितेन पुनः पुनः ।
चिक्कणेन मुखे वामे कुर्यान्मार्जनकर्म च ।। 855

पिण्डिकां पूरिकाकारसंमिताकृतिधारिणीम् ।
किञ्चिन्मात्रेण चान्येन वक्त्रं दक्षं प्रलेपयेत् ।। 856

अनेनैव भवेन्नादो मृदङ्गस्य मनोहरः ।
मुखयोर्बोहणं दत्वा वादयित्वा नन द्वयम् ।। 857

गिडदामिति वामन्तु गडदामिति दक्षिणम् ।
एवं कुर्यान्मर्दलन्तु सम्यक्पूर्वोक्तरीतितः ।। 858

पुरा मुरासुरं हत्वा भगवान्भक्तवत्सलः ।
तत्कलेबरमादाय मर्दलं कृतवान्भुवि ।। 859

## अथ मृदङ्गधारिलक्षणम्

**(भरतसङ्ग्रहे)**

180A जितश्रमः तालशास्त्रनिपुणो विजयी सदा ।
शक्तःस्थावरवाद्यादौ श्रुतिमेलविचक्षणः ।। 860
गीतनृत्तानुकूलो यः स हि मार्दङ्गिकोत्तमः ।। 860A

## मृदङ्गधारणकाले प्रार्थना

अत्रैव -

सदानन्दितचण्डीशं नन्दिकेश्वरदैवतम् ।
तद्धिद्धादिस्वराद्यङ्गं मृदङ्गं प्रणमाम्यहम् ।। 861

## अथ तालनिर्माणक्रमः

### (शिवतत्त्वरत्नाकरे)

कांस्येन तालयुग्मं स्यादङ्गुलत्रयसम्मितम् ।
वर्तुलं मध्यतो निम्नं भवेदङ्गुलमात्रकम् ।। 862

गुञ्जाप्रमाणविवरम् अङ्गुलद्वयविस्तृतम् ।
यवप्रमाणपिण्डञ्च श्लक्ष्णमन्योन्यसन्निभम् ।। 863

तस्य पट्टाञ्चलाग्राणि रन्ध्रे प्रक्षिप्य रज्जुवत् ।
यथा रन्ध्रान्न निर्यायाद्ग्रन्थिं दद्यात्तदग्रतः ।। 864

संवेष्ट्य तर्जनीं वामां अङ्गुष्ठेन प्रपीड्य च ।
कार्यस्तिर्यङ्मुखस्तालः तालमध्ये प्रयत्नतः ।। 865

कनिष्ठिकानामिकामध्याः पाणिशाखाः प्रसारयेत् ।
तेन तालाग्रदेशेन ताडयेन्मध्यतोऽपरा ।। 866

लघुगुर्वादिभिर्वान्यैः वादयेद्बहुभङ्गिभिः ।
एवं कुर्यात्कांस्यतालयुग्मं शास्त्रोक्तवर्त्मना ।। 867

कटकामुखहस्तेन वादयेत्तालधारकः ।

## अथ तालधारलक्षणम्

### (भरतसङ्ग्रहे)

तालज्ञः शीघ्रहस्तश्च ध्वनिमार्गविचक्षणः ।। 868

तौर्यत्रिकविशेषज्ञः सर्वभाषाविशारदः ।
शुद्धदेश्यादिभेदज्ञः तेषां नृत्तविशेषवित् ।। 869

पाठाक्षरव्यग्रहस्तः प्रसन्नवदनाम्बुजः ।
स्वेदभेदविनिर्मुक्तः तालधारी कृती भवेत् ।। 870

## तालधारणकाले प्रार्थना

अत्रैव -

ब्रह्मविष्णुमहेशाननारदानिलदैवतम् ।
शिवशक्तिद्वयाकारं कांस्यं तालं नमाम्यहम् ।। 871

## अथ रागालापनकालः - सूर्योदयादारभ्य पुनस्सूर्योदयपर्यन्तं गातव्यरागनामानि

**(सङ्गीतरत्नाकरे सङ्गीतसङ्ग्रहे च)**

भैरवो मालवाभिख्यः गौलो रामकलिस्तथा ।
मल्हरीनामको गुण्डक्रियाघूर्जरिनामकः ।। 872

बिल्हरी जोगिसावेरी रागः पन्तुवरालिका ।
तथा मङ्गलकौशिक्याख्यो रागश्च वरालिका ।। 873

असावेरी च सावेरी रागश्चेति यथाक्रमम् ।
सूर्योदयात्समारभ्य गातव्याः प्रहरावधि ।। 874

## अथ द्वितीययामे

शुद्धसावेरिका तोडीरागः सारङ्गनामकः ।
स्याद्बृन्दावनसारङ्गो रागस्स्यान्मध्यमावती ।। 875

श्रीरागो मणिरङ्गुश्च वसन्ताख्यः ततः परम् ।
वसन्तभैरवीरागोऽप्यठाणा सुरटिस्तथा ।। 876

क्रमान्मध्याह्नपर्यन्तं ज्ञेया रागा विचक्षणैः । 876A

## अथ तृतीययामे

भैरवीराग आनन्दभैरवीराग एव च ।
हुशेनीनामको रागः नीलम्बर्यभिधस्तथा ।। 877

काम्बोजिका यदुकुलकाम्बोजी रीतिगौलकः ।
केतारगोलको रागः शङ्कराभरणाभिधः ।। 878

नवरोजश्च केताररागश्चेति यथाक्रमम् ।
एते रागास्तु गातव्याः तृतीयप्रहारावधिः ।। 879

## अथ चतुर्थयामे

कल्याणी च मुखारी च रागः सौराष्ट्रनामकः ।
रागो धनासरीनामा दरबारुसमाह्वयः ।। 880

कापीरागश्शाहनाख्यो द्विजावन्त्यभिधः परः ।
रागो नाटीकुरञ्जाख्यो नायकीराग एव च ।। 881

नाटीरागस्तथा गौरीरागः पार्वीसमाह्वयः ।
यमुनाख्यो गौलपन्तु रागश्चेति यथाक्रमम् ।। 882

रागास्सूर्यास्तपर्यन्तं गातव्याः गानकोविदैः ।

## अथ रात्रौ प्रथमयामे

मोहनाख्यश्चारभी च पूर्वकल्याणिकाभिधः ।। 883

रागो हम्मीरकल्याणी श्यामकल्याणिकाभिधः ।
यमुनाकल्याणिका च कमाचुश्च ततः परम् ।। 884

तथा सुरटिमल्हारीरागश्चेति यथाक्रमम् ।
रात्रौ प्रथमयामान्तं रागा गेयास्तु गायकैः ।। 885

### अथ रात्रौ द्वितीययामे

सैन्धवी देवगान्धारी नादनामक्रिया तथा ।
रागो ब्यागडनामा च कन्नडाख्यः ततः परम् ।। 886

तथैव छाया नाटी च रागा ह्येते यथाक्रमम् ।
रात्रौ द्वितीययामान्तं गातव्या गानकोविदैः ।। 887

### अथ रात्रौ तृतीययामे

स्यात्पुन्नागवराली च घण्टारागस्ततः परम् ।
आहरीनामको रागो धन्यासीनामकोऽपरः ।। 888
रात्रौ तृतीययामान्तम् एते रागाः शुभप्रदाः ।। 888A

### अथ रात्रौ चतुर्थयामे

मत्तकोकिलरागश्च कलकण्ठाख्यरागकः ।
फर्जुरागश्च ललितरागः पञ्चमनामकः ।। 889

ललितापञ्चमाभिख्यो रागो हिन्दोलनामकः ।
बिभासुरागो चाली च भूपालीनामकः परः ।। 890

देशाक्षरी च विख्यातो निशायां तुर्ययामकः ।
आरभ्य सूर्योदयान्तम् एते रागाः शुभावहाः ।। 891

गायकानां हि सङ्केतं तथानुभवमेव च ।
समाश्रित्यैष सम्प्रोक्तो रागाणां कालनिर्णयः ।। 892

### अथ सूर्यांशचन्द्रांशसम्भूतरागाः - रागालापकालाश्च

### (शिवतत्त्वरत्नाकररीत्या लिख्यन्ते)

दिवाद्ययामे देशाक्षी भैरवः फलमञ्जरी ।
भूपाली साहुरी देवक्रिया घूर्जरसम्भवा ।। 893

वेलावली द्वितीये तु कुरञ्जी शुभकौशिकी ।
कुण्डी वराली धन्यासी बङ्गालाख्यो वसन्तकः ।। 894

181A ललिताथ तृतीये तु यामे जीमूतरञ्जनी ।
चाली चान्दोलिकारामक्रिया गुण्डक्रियाभिधः ।। 895

मल्हारी देशिकाराख्यो भल्लारी शुद्धभैरवी ।
तुर्ययामे मालविका छायागौलाख्यरागकः ।। 896

श्रीरागः पूर्वगौली च सारङ्गो रीतिगौलकः ।
कर्नाटी गौलको रागः स्यान्नारायणगौलकः ।। 897

रक्तहंसी माहुरी च तथा सालगभैरवी ।
रागो रञ्जिकरागश्च गातव्या गायकोत्तमैः ।। 898

एते सूर्यांशसम्भूताः सायङ्काले तु निन्दिताः ।
प्रगायति दिवा यो हि स नरस्सुखमेधते ।। 899

शुद्धनट्टा सालगाख्यनट्टा शुद्धवरालिका ।
छायावरालिका चैव द्राविडाख्यवरालिका ।। 900

देशी नागवराली च माधुर्यं बालिका तथा ।
मल्हारी च तथा छाया गौडी कर्नाटकाह्वया ।। 901

गौडी मालवगौडी च रीतिरामक्रिया तथा ।
छायारामक्रियारङ्गच्छाया सर्ववरालिका ।। 902

कर्नाटाह्वयवङ्गोलसहिताः चन्दिरांशजाः ।
रात्रावेते प्रगातव्याः तस्य श्रीरतुला भवेत् ।। 903

अत्रोक्तेतररागाणां न वेलानियमः क्वचित् ।
अवेलारागमाकर्ण्य तस्य दोषप्रशान्तये ।। 904

ईशानञ्च हरिं स्मृत्वा मध्यमादीन् प्रयोजयेत् ।
देवताविषये गीतं पुण्यगीतं च यद्भवेत् ।। 905

अध्यात्मं चैव यद्गानं तथा तत्पापनाशनम् ।
विवाहसमये गानं देवतास्तुतिपूर्वकम् ।। 906

अवेलारागमाकर्ण्य न दोषः परिकीर्तितः ।
सर्वेषामिह रागाणां रागिणीनां च सर्वशः ।। 907

रङ्गभूमौ नृपाज्ञायां कालदोषो न विद्यते ।

## अथ अपूर्वरागाणां नामानि

### (सङ्गीतसङ्ग्रहे)

[१]वनस्पति[२]र्भानुमती [३]मोहना [४]पूर्णचन्द्रिका ।। 908

[५]कनकाङ्गी [६]मानवती [७]भोगी च [८]कनकाम्बरी ।
[९]सामन्त[१०]स्साम [११]जुञ्जोटः [१२]धेनुका [१३]कोकिलप्रिया ।। 909

[१४]मनोरञ्जनिकारागो [१५]मान्दीरागो [१६]मनोरमा ।
[१७]श्रीरञ्जनी च [१८]टक्का च [१९]शुद्धदेशी च [२०]मारवः ।। 910

[२१]सैन्धवी [२२]कोकिलरवो [२३]मालवश्री[२४]र्जुजावलिः ।
[२५]घनश्यामलरागश्च [२६]रूपवत्यभिधः परः ।। 911

[२७]गुम्भकाम्बोजिकारागो [२८]जगन्मोहनकाभिधः ।
[२९]सुरसिन्धु[३०]स्सूर्यकान्तः स्याद्राग[३१]स्सुप्रदीपिका ।। 912

[३२]हंसध्वनिश्च [३३]झेङ्कारध्वनिः वै [३४]चित्तमोहिनी ।
[३५]जयन्तश्री[३६]र्भिन्नषड्जो [३७]भिन्नपञ्चमरागकः ।। 913

[३८]झेङ्कारभ्रमरीरागो रागो वै [३९]पूर्णपञ्चमः ।
[४०]वकुलाभरणाख्यश्च [४१]नागगान्धारिकाभिधः ।। 914

[४२]सेनाग्रणी[४३]स्तनूकीर्ती रागश्च [४४]नटभैरवी ।
[४५]हरिकाम्बोजिका [४६]राकाचन्द्रिकाऽ[४७]मृतवाहिनी ।। 915

[४८]हनूमत्तोडिकादीरः [४९]शङ्कराभरणाभिधः ।
रागश्च [५०]पूर्णललिता तथा[५१]ऽमृतलहर्यपि ।। 916

181B

[५२]छायातरङ्गिणीरागो [५३]जयनारायणाभिधः ।
[५४]चिन्तामणिश्च [५५]कनकवसन्तो [५६]रविचन्द्रिका ।। 917

[५७]मायातरङ्गिणीरागो [५८]रागस्सारस्वताभिधः ।
[५९]माञ्जी च [६०]सरसाङ्गी च तथैवेश[६१]मनोहरी ।। 918

[६२]रत्नपञ्जररागश्च तथा [६३]राममनोहरी ।
[६४]सरस्वती-मनोहर्याह्वानो [६५]हैमवती परा ।। 919

[६६]कोला [६७]कलावती चैव [६८]मायूरी च [६९]भुजङ्गिका ।
[७०]सिंहरागश्च [७१]कल्लोलो रागो वै [७२]षष्ठमञ्जरी ।। 920

[७३]हटकाम्बोजिकारागः तथैवो[७४]दयचन्द्रिकः ।
[७५]रामकेल्याख्यरागश्च पक्षिपर्वतसङ्ख्यकाः ।। 921

एते रागाः समाख्याताः यथासम्भवतो मताः ।
अपूर्वाश्शास्त्रसिद्धाश्च रागाश्चान्येऽप्यनन्तकाः ।। 922

## अथ सम्पूर्णरागषाडवरागऔडवरागाणां कालफलनिर्णयः

### (शिवतत्त्वरत्नाकरे)

आयुर्धर्मो यशो बुद्धिः धनं धान्यं बलं शुभम् ।
राज्याभिवृद्धिस्सन्तानः पूर्णरागे फलं भवेत् ।। 923

सङ्ग्रामे रूपलावण्यं विरहो गुणकीर्तनम् ।
षाडवेन प्रगातव्यं लक्षणं चरितं तथा ।। 924

व्याधिनाशे शत्रुनाशे भयशोकविनाशने ।
दुःस्थिते चैव सन्तापे मङ्गलाशिषि संयुते ।। 925

औडवेन प्रगातव्यं क्षामे च ग्रहमोक्षणे । 925A

## अथ नाट्यपदानि

### (अस्मत्कृतसङ्ख्यारत्नकोशव्याख्याप्रभावल्याम्)

[१]प्रत्याहतं [२]विसृष्टं च [३]निश्शब्दं [४]शब्दताडनम् ।
[५]तलसञ्चलनं चैव [६]मुण्डितं चा[७]ग्रमु[८]ग्रकम् ।। 926

[९]ऊर्ध्वं [१०]पार्श्वं [११]समं [१२]पृष्ठम् इति नाट्यपदं स्मृतम् ।
भरते द्वादशविधं विज्ञेयं विबुधोत्तमैः ।। 927

## अथ रूपकाणि

### (प्रभावल्याम्)

ईहामृगः प्रकरणं व्यायोगो नाटकं डिमः ।
वीथी समवकारोऽङ्को भाणः प्रहसनं त्विति ।। 928

रूपकं दशधा काव्यप्रकाशे समुदीरितम् । 928A

## अथ मुखसन्ध्यङ्गानि

### (प्रभावल्याम्)

[१]उपक्षेपः [२]परिकरः [३]परिन्यासो [४]विलोभनम् ।
[५]उद्भेदः [६]करणं [७]प्राप्तिः [८]विधानं [९]परिभावना ।। 929

[१०]भेदो [११]युक्ति[१२]स्समाधानम् इति द्वादशधेरितम् ।
काव्यप्रकाशे विज्ञेयं मुखसन्ध्यङ्गमुत्तमैः ।। 930

## अथ प्रतिमुखसन्ध्यङ्गानि

(प्रभावल्याम्)

[१]उपन्यास[२]श्शमो [३]वर्णसंहारः [४]पर्युपासनम् ।
[५]विधूतं च [६]विलासश्च [७]निरोधः [८]परिसर्पणम् ।। 931
[९]नर्मद्युतिः [१०]प्रगमनं [११]वज्रं [१२]पुष्पं च [१३]नर्म च ।
इति काव्यप्रकाशे तु त्रयोदशविधं स्मृतम् ।। 932
विज्ञेयं च प्रतिमुखसन्ध्यङ्गं विबुधोत्तमैः । 932A

## अथ गर्भसन्ध्यङ्गानि

(प्रभावल्याम्)

[१]अभूताहरणं [२]मार्गः [३]क्रमो [४]रूपं च [५]सम्भ्रमः ।
[६]आक्षेपश्च [७]तथोद्योगः [८]तोटकं [९]चानुमानकम् ।। 933
182A [१०]सङ्ग्रह[११]श्चोदाहरणं [१२]तथाधिबलमित्यपि ।
नाटके द्वादशविधं गर्भसन्ध्यङ्गमीरितम् ।। 934

## अथ विमर्शसन्ध्यङ्गानि

(प्रभावल्याम्)

[१]अपवादश्च [२]सम्फेटो [३]विद्रवश्च [४]द्रवस्तथा ।
[५]निरोधनं च [६]शक्तिश्च [७]व्यवसायः [८]प्रसङ्गकः ।। 935
[९]प्ररोचनं च [१०]चलनं [११]द्युति[१२]रादानमेव च ।
तथा [१३]विचलनं चेति त्रयोदशविधं स्मृतम् ।। 936
विमर्शसन्ध्यङ्गमपि ज्ञेयं काव्यप्रकाशके । 936A

## अथ निर्वहणसन्ध्यङ्गानि

### (प्रभावल्याम्)

१सन्धि२र्विरोधो ३ग्रथनं ४निर्णयः ५पर्युपासनम् ।
६आनन्दश्च ७प्रसादश्च ८समयश्चा९भिभाषणम् ।। 937

१०पूर्वभावः ११कृतिश्चैव १२प्रशस्ति१३रुपगूहनम् ।
१४उपसंहार इत्येवं चतुर्दशविधं तथा ।। 938

काव्यादर्शे निर्वहणसन्ध्यङ्गं परिकीर्तितम् । 938A

## अथ प्रहसनाङ्गानि

### (अलङ्कारशास्त्रे)

१स्थितपाद्यं २गेयपदं ३सैन्धवं ४पुष्पगन्धिका ।
५उक्तप्रत्युक्त६मासीनं ७उत्तमोत्तमकं तथा ।। 939

८प्रभेदकं ९त्रिमूढं च १०द्विमूढमिति च क्रमात् ।
दश प्रहसनाङ्गानि ह्यलङ्कारे परिस्फुटम् ।। 940

## अथ वीथ्यङ्गानि

### (प्रभावल्याम्)

१उद्घात्यका२वलगिते ३प्रपञ्च४स्त्रिगतं ५छलम् ।
६वाक्के७ल्यधिबलं ८गण्डम् ९अवस्कन्दित१०नालिके ।। 941

११असत्प्रलाप१२व्याहार१३मृदवानीति कीर्तितम् ।
काव्यप्रकाशे वीथ्यङ्गं त्रयोदशविधं स्मृतम् ।। 942

### अथ वागारम्भाः

(प्रभावल्याम्)

[1]आलापश्च [2]विलापश्च [3]सँल्लापश्च [4]प्रलापकः ।
[5]अपलापश्चा[6]नुलाप[7]स्सन्देश[8]स्त्वतिदेशकः ।। 943

[9]अपदेश[10]श्चोपदेशो [11]निर्देशो [12]व्यपदेशकः ।
वागारम्भा द्वादशधा नाटके परिकीर्तिताः ।। 944

### अथ नाटकवर्ज्यव्यापाराः

(अलङ्कारे)

[1]अम्बरग्रहणं [2]युद्धं [3]स्नानं [4]चाप्यनुलेपनम् ।
[5]राष्ट्रबाधा [6]देशबाधा [7]दूराध्वा [8]सुरतं तथा ।। 945

[9]भोजनं चैव [10]संरोधो व्यापारास्तु दशाप्यमी ।
नाटकाभिनये वर्ज्यास्त्वलङ्कारे प्रकीर्तिताः ।। 946

### अत पदगतदोषाः

(प्रभावल्याम्)

[1]क्लिष्टत्वं [2]च्युतसंस्कारो [3]ग्राम्यत्वं [4]चाप्रयुक्तता ।
[5]गूढार्थकत्वं [6]पारुष्यम् [7]अन्यार्थत्वं [8]निरर्थता ।। 947

[9]अश्लीलत्वं [10]चाविमृष्टविधेयांशत्वमेव च ।
[11]असामर्थ्यम् [12]अथापुष्टार्थत्वं [13]सन्दिग्धता तथा ।। 948

[14]अप्रतीतिकता चैवम् [15]अप्रयोजकता तथा ।
[16]विरुद्धमतिकृत्त्वं च [17]नेयार्थत्वं तथेत्यपि ।। 949

काव्यप्रकाशे च पदगतदोषा उदाहृताः ।
विज्ञेयाः सप्तदशधा काव्यलक्षणवेदिभिः ।। 950

## अथ अर्थगतदोषाः

### (प्रभावल्याम्)

182B

[१]अपार्थत्वं [२]व्यर्थता च [३]तथैकार्थत्वमेव च ।
[४]ससंशयत्वं [५]भिन्नत्वं [६]पारुष्यम[७]तिमात्रता ।। 951

[८]अपक्रमत्वं [९]वैरस्यं [१०]न्यूनौपम्यं [११]विरुद्धता ।
[१२]असदृक्षोपमत्वं च [१३]हेतुशून्यत्वमेव च ।। 952

[१४]तथाधिकोपमत्वं च [१५]निरलङ्कारता तथा ।
[१६]अश्लीलता [१७]सहचरच्युतत्वं च तथैव हि ।। 953

[१८]अप्रसिद्धोपमत्वं चेत्यष्टादशविधः स्मृतः ।
काव्यप्रकाशेऽर्थगतदोषो ज्ञेयो मनीषिभिः ।। 954

## अथ वाक्यदोषाः

### (प्रभावल्याम्)

[१]क्रमभ्रंशो [२]विसन्धित्वं [३]शब्दहीनत्वमेव च ।
[४]व्याकीर्णत्वं [५]पौनरुक्त्यं [६]वाक्यसङ्कीर्णता तथा ।। 955

[७]न्यूनौ[८]पम्यमपूर्णत्वं [९]भिन्नलिङ्गत्वमेव च ।
[१०]विभिन्नवचनत्वं च [११]समाप्तपुनरात्तता ।। 956

[१२]छन्दोभग्नं तु [१३]सम्बन्धवर्जितत्वं तथैव च ।
[१४]अधिकौपम्यमस्थान[१५]समानत्व[१६]मरीतिता ।। 957

[१७]पतत्प्रकर्षता [१८]वाच्यवर्जितत्वमतः परम् ।
[१९]यतिभ्रंशोऽ[२०]शरीरत्वं तथा [२१]प्रक्रमभग्नता ।। 958

[२२]विसर्गलुप्तता [२३]वाक्यगर्भितत्वं तथैव च ।
[२४]तथाधिकपदत्वं चेत्येवं काव्यप्रकाशके ।। 959

चतुर्विंशतिधा वाक्यदोषश्च परिकीर्तितः । 959A

## अथ काव्यगुणाः

### (प्रभावल्याम्)

[१]श्लेषश्च [२]सुकुमारत्वम् [३]अर्थव्यक्ति[४]रुदात्तता ।
[५]माधुर्यं [६]समता [७]कान्तिः [८]प्रेयस्त्वं च [९]सुशब्दता ।। 960
[१०]ओजः [११]प्रसाद[१२]श्चौदार्यम् [१३]ऊर्जितत्वं च [१४]विस्तरः ।
[१५]सौक्ष्म्यं [१६]समाधि[१७]र्गाम्भीर्यं [१८]सङ्क्षेपो [१९]भाविकं तथा ।। 961
[२०]प्रौढिः [२१]प्रीति[२२]स्सम्मितत्वं [२३]गतिरुक्ति[२४]रितीरिता ।
चतुर्विंशतिधा काव्यगुणः काव्यप्रकाशके ।। 962

## अथ महाकाव्यवर्णनानि

### (प्रभावल्याम्)

[१]समुद्रो [२]नगरं [३]युद्धं [४]ऋतु[५]श्चन्द्रोदयस्तथा ।
[६]विप्रलम्भो [७]विवाहश्च [८]द्यूतं [९]सूर्योदयो [१०]गिरिः ।। 963
[११]रत्युत्सवश्च [१२]मन्त्रश्च [१३]नायकाभ्युदयस्तथा ।
[१४]प्रयाणं च [१५]जलक्रीडा [१६]कुमारोदय एव च ।। 964
[१७]मधुपानं [१८]तथोद्यानम् इत्यष्टादशधा तथा ।
काव्यप्रकाशे च महाकाव्यवर्ण्यं प्रकीर्तितम् ।। 965

## अथ नवरसाः

### (अलङ्कारे)

[१]शृङ्गार[२]वीर[३]करुणाः [४]अद्भुतो [५]हास्यनामकः ।
[६]भयानकश्च [७]बीभत्सरसो [८]रौद्रश्च [९]शान्तकः ।। 966
एते नव रसाः प्रोक्ताः स्फुटं काव्यप्रकाशके । 966A

## अथ नवरसस्थायिभावाः

### (अलङ्कारे)

शृङ्गारे तु [१]रतिः स्थायी वीरे [२]चोत्साह एव च ।
करुणे चैव [३]शोकस्स्यादद्भुते [४]विस्मयो मतः ।। 967

हास्ये [५]हासस्तथा स्थायी भयं चैव [६]भयानके ।
बीभत्से च [७]जुगुप्सा स्याद्रौद्रे [८]क्रोधः प्रकीर्तितः ।। 968

[९]शमः स्थायी शान्तरसे शृङ्गारादिरसेष्वमी ।
स्थायिभावा नव प्रोक्ताः क्रमात्काव्यप्रकाशके ।। 969

183A

## अथ शृङ्गारादिनवरसेषु व्यभिचारिभावाः

### (शिङ्गभूपालीये अलङ्कारे च)

[१]निर्वेदश्च [२]विषादश्च [३]ग्लानि[४]र्दैन्यं [५]श्रमो [६]मदः ।
[७]गर्व[८]स्त्रासश्च [९]शङ्का च [१०]व्याधि[११]रुन्मत्तता तथा ।। 970

[१२]अपस्मृतिस्तथाऽऽ[१३]वेगो [१४]मृतिभाव[१५]स्स्मृति[१६]र्धृतिः ।
[१७]मोहो [१८]व्रीडा तथाऽ[१९]लस्यम् [२०]अवहित्था [२१]तथोग्रता ।। 971

[२२]जाड्यं [२३]चिन्ता [२४]वितर्कश्च [२५]मति[२६]र्हर्षश्च [२७]चापलम् ।
[२८]अमर्षश्च [२९]तथौत्सुक्यम् [३०]असूया [३१]सुप्तिरेव च ।। 972

[३२]निद्रा चैव [३३]प्रबोधश्च शृङ्गारादिरसेष्वपि ।
त्रयस्त्रिंशदमी भावाः सम्प्रोक्ताः व्यभिचारिणः ।। 973

## अथ शृङ्गाररससात्त्विकभावाः

### (अलङ्कारे)

[१]स्तम्भ[२]प्रलय[३]रोमाञ्चाः [४]स्वेदो [५]वैवर्ण्य[६]वेपथू ।
[७]अश्रु वै[८]स्वर्यमित्यष्टौ शृङ्गारे सात्त्विका मताः ।। 974

## अथ अवस्थाः

(अस्मत्कृतसङ्ख्यारत्नकोशव्याख्याप्रभावल्याम्)

[१]चक्षुःप्रीति[२]र्मनस्सङ्गः [३]कृशता [४]जागरोऽ[५]रतिः ।
[६]अन्त[७]ह्रीत्याग[८]सङ्कल्पाः [९]मूर्च्छा [१०]चोन्माद इत्यपि ।। 975
अवस्था दशधा चैवम् अलङ्कारे प्रकीर्तिताः । 975A

## अथ स्त्रीजातिभेदाः

(रतिरहस्ये)

पद्मिनी हस्तिनी चैव शङ्खिनी चित्रिणी तथा ।
स्त्रीजातयश्चतस्रोऽमूः प्रोक्ता रतिरहस्यके ।। 976

## अथ स्त्रीणामवान्तरजातिभेदाः

(रतिरहस्ये)

मृगीजातिश्च बडवाजातिश्च हरिणीत्यपि ।
स्त्रीणां वात्स्यायने प्रोक्ताः तिस्रोऽवान्तरजातयः ।। 977

## अथ पुरुषजातिभेदाः

(रतिरहस्ये)

[१]भद्रो [२]दत्तः [३]कूचिमारः [४]पाञ्चालश्चेति च क्रमात् ।
पुंजातयश्चतस्रोऽमूः प्रोक्ता रतिरहस्यके ।। 978

## अथ पुरुषावान्तरजातिभेदाः

(रतिरहस्ये)

[१]शशजातिश्चा[२]श्वजातिः [३]वृषजातिरिति क्रमात् ।
पुरुषाणान्तु कक्कोले तिस्रोऽवान्तरजातयः ।। 979

## अथ प्रबन्धनायकचतुष्टयनामानि

(अलङ्कारे)

[1]धीरोदात्तो नायकश्च ततो [2]धीरोद्धतो मतः ।
तथैव [3]धीरललितो [4]धीरशान्त इति क्रमात् ।। 980

प्रबन्धनायकास्त्वेते चत्वारोऽलङ्कृतौ मताः । 980A

## अथ प्रबन्धनायकावान्तरभेदाः

(लक्षणशास्त्रे)

[1]नायकश्च [2]तथैवोपनायकः [3]प्रतिनायकः ।
त्रयोऽवान्तरभेदास्स्युः नायकानान्तु लक्षणे ।। 981

## अथ नायकचतुष्टयम्

(अलङ्कारे)

[1]अनुकूलो [2]दक्षिणश्च [3]धृष्टश्च [4]शठ इत्यपि ।
चत्वारो नायकास्त्रीणाम् अलङ्कारे प्रकीर्तिताः ।। 982

## अथ उपनायकचतुष्टयनामानि

(अलङ्कारे)

[1]विटो [2]विदूषक[3]श्चेटः [4]पीठमर्द इति क्रमात् ।
183B नायकानां सहायास्तु चत्वारश्चोपनायकाः ।। 983

## अथाष्टविधनायिकानामानि

(अलङ्कारे)

[1]स्वाधीनपतिका चैव [2]कलहान्तरिता तथा ।
[3]खण्डिता [4]विप्रलब्धा च तथा [5]प्रोषितभर्तृका ।। 984

[६]विरहोत्कण्ठिता चैव तथा [७]वासकसञ्ज्ञिका ।
[८]तथाभिसारिका चेति नायिका ह्यष्टविधाः स्मृताः ।। 985

### अथाष्टविधनायिकासहायचेटीनामानि

### (अलङ्कारे)

[१]प्रातिवेशिनिकी [२]चेटी [३]शिल्पिनी [४]लिङ्गिनी [५]सखी ।
[६]धात्रेयी च तथा [७]दूती [८]दासी चेति क्रमादमूः ।। 986
नायिकानां सहायास्स्युः अष्टचेट्यस्त्वलङ्कृतौ । 986A

### अथ स्त्रीकलास्थानानि

### (रतिरहस्यरीत्या लिख्यन्ते)

[१]अङ्गुष्ठस्त्वार्तवदिने द्वितीये [२]चरणस्तथा ।
[३]गुल्फस्थानं तृतीये स्यात् [४]जानुस्थानं तुरीयके ।। 987
पञ्चमे [५]जघनस्थानं [६]नाभिस्थानन्तु षष्ठके ।
[७]वक्षःस्थलं सप्तमे स्यात् [८]स्तनस्थानं तथाष्टमे ।। 988
[९]कक्षस्थानं च नवमे दशमे [१०]कण्ठ एव च ।
एकादशे [११]कपोलश्च द्वादशे [१२]चाधरोष्ठके ।। 989
त्रयोदशे तु [१३]नयनम् [१४]अलकालिश्चतुर्दशे ।
[१५]मूर्धस्थानं पञ्चदशे कलास्थानानि योषिताम् ।। 990
उक्तान्येवं पञ्चदश क्रमाद्रतिरहस्यके ।
आरभ्य चार्तवदिनादापञ्चदशवासरम् ।। 991
वामाङ्गुष्ठं समारभ्य मूर्धस्थानावधि क्रमात् ।
आरोहणं कलायास्तु पुनश्चापुष्पवासरम् ।। 992

मूर्धस्थानं समारभ्य दक्षाङ्गुष्ठावधि क्रमात् ।
कलावरोहणं स्त्रीणां स्थानेषु दशपञ्चसु ।। 993

## अथ चुम्बनस्थानानि

### (कक्कोके)

[१]नेत्र[२]कण्ठ[३]कपोलं च [४]चुबुकं [५]चाधरोष्ठकः ।
[६]जिह्वा [७]स्तनश्च [८]फालं च [९]नाभिस्थानं च [१०]गुह्यकम् ।। 994
दशैवं चुम्बनस्थानान्युक्तान्यत्र परस्परम् ।
स्त्रीणां च पुरुषाणां च व्यक्तं चैव ककोकके ।। 995

## अथ दशविधदन्तक्षतनामानि

### (रतिरहस्ये)

[१]मण्डलाकृतिसंज्ञं च तथा [२]कङ्कणभूषणम् ।
[३]छिन्नाभ्रकं [४]बिन्दुसंज्ञं [५]मणिविद्रुमनामकम् ।। 996
[६]उत्थानकं [७]गूढकाख्यं [८]तिलाख्यं [९]कालवञ्चितम् ।
[१०]प्रवालमणिसंज्ञं चेत्येवं दशविधानि तु ।। 997
दन्तक्षतानि प्रोक्तानि क्रमाद्रतिरहस्यके । 997A

## अथ सप्तविधनखक्षतनामभेदानि

### (विवेकचिन्तामणौ)

[१]मयूरप्लुतयोगोऽ[२]र्धचन्द्रयोगः ततः परम् ।
तथा [३]पञ्चनखाख्यश्च [४]कमण्डलुसमाह्वयः ।। 998
[५]शशप्लुताख्ययोगश्च [६]तथैवोत्पलयोगकः ।
[७]द्वन्द्वयोगश्चेति नखक्षतभेदाः प्रकीर्तिताः ।। 999
विवेकचिन्तामण्याख्यग्रन्थे सप्त परिस्फुटम् । 999A

## अथ बाह्यसुरतव्यापारभेदाः

(अनङ्गरङ्गे)

[१]सँल्लाप[२]श्चुम्बनं [३]गाढालिङ्गनं [४]स्तनपीडनम् ।
[५]नखक्षतं [६]ताडनं च [७]विग्रहोऽनङ्गरङ्गके ।। 1000
सम्प्रोक्ताः बाह्यसुरतव्यापाराश्चैव सप्तधा । 1000A

## अथ रेतःपतनकाले चेष्टाभेदाः

(वात्स्यायने)

[१]मणितं [२]पेटनं [३]पादताडनं [४]स्तनपीडनम् ।
[५]हस्ताघातस्तथा [६]गाढालिङ्गनं [७]नखपीडनम् ।। 1001
[८]दन्ताघातस्तथा [९]केशाकर्षणं चैव [१०]चुम्बनम् ।
रेतःपतनकालीनचेष्टाः दशविधाः इति ।। 1002
वात्स्यायनीये सम्प्रोक्ताः सरसानां मनोहराः । 1002A

## अथ चतुरशीतिबन्धाः

(अनङ्गरङ्गे)

[१]चक्रबन्धः [२]पद्मबन्धो [३]भ्रमणाख्योऽ[४]म्बकाभिधः ।
[५]धेनुकाख्यश्चैक[६]पादबन्धो [७]घटितनामकः ।। 1003
[८]उपरत्याख्यबन्धश्च [९]मर्कटो [१०]मकराभिधः ।
[११]मार्जालाख्यो [१२]व्यस्तबन्धः [१३]शुनकाख्य[१४]श्शुकाह्वयः ।। 1004
[१५]कुक्कुटाख्यो [१६]गार्धभाख्यो [१७]मृगाख्यो [१८]हस्तिकाभिधः ।
[१९]स्वस्तिकाख्यो [२०]हंसबन्धः [२१]क्रौञ्चाख्यः [२२]सर्पनामकः ।। 1005
[२३]वल्लीबन्धः [२४]कूर्मबन्धो [२५]मत्स्याख्यो [२६]जालनामकः ।
[२७]कचग्रहाख्यबन्धश्च [२८]देवबन्धो [२९]भयानकः ।। 1006

[३०]जयबन्ध[३१]श्शङ्खबन्धो [३२]मुसलाख्यश्च [३३]मन्मथः ।
[३४]कुमुदाख्यो [३५]डोलकाख्यो [३६]नागबन्धश्च [३७]पल्लवः ।। **1007**

[३८]संयुताख्यः [३९]कर्कटाख्यः [४०]केसराख्यश्च [४१]वृश्चिकः ।
[४२]अयुताख्यो [४३]घूकसंज्ञो [४४]मयूराख्यश्च [४५]गारुडः ।। **1008**

[४६]रम्भाप्रियकरो बन्धः [४७]कलावतरणाभिधः ।
[४८]चन्द्राभरणनामा च [४९]मुरजाख्यश्च [५०]विप्लुतः ।। **1009**

[५१]शङ्करप्रियबन्धश्च बन्धः [५२]कन्तुकसंज्ञितः ।
[५३]एकरूपश्च [५४]ललितो [५५]ध्वजः [५६]पारावताभिधः ।। **1010**

[५७]गौरीप्रियो [५८]विक्रमाख्यो [५९]विजयाख्यश्च [६०]कुण्डली ।
[६१]तिर्यग्बन्धो [६२]वेणुबन्धः [६३]चित्राख्योऽ[६४]धोमुखाभिधः ।। **1011**

[६५]सर्वतोमुखबन्धश्च [६६]मण्डूकाख्योऽ[६७]द्रुताह्वयः ।
[६८]त्रिवल्याख्यो [६९]नीलबन्धः [७०]कर्णाभरणनामकः ।। **1012**

[७१]तुरगारोहबन्धस्स्यादङ्गुली[७२]पीडनाभिधः ।
[७३]विचित्राख्यो [७४]हास्यबन्धः [७५]वीरदर्पविनाशनः ।। **1013**

[७६]विटाधिपतिबन्धश्च बन्धः [७७]सर्वाङ्गमर्दनः ।
[७८]नीवीनिवारणाभिख्यः [७९]ऋक्षाख्यो [८०]वलिकाभिधः ।। **1014**

[८१]शार्दूलबन्धो [८२]वृषभबन्धः [८३]कन्दर्पबन्धकः ।
[८४]बन्धराजाख्यबन्धश्चेत्येवं बन्धाः प्रकीर्तिताः ।। **1015**

अनङ्गरङ्गे च चतुरशीती रतिसाधनाः । **1015A**

## अथ दोहलभेदाः

(शिवतत्त्वरत्नाकरे)

अशोकनामकतरोस्सुन्दर्याः [१]पादताडनम् ।
तरुण्याश्चैव [२]गण्डूषः चम्पकाख्यतरोर्मतः ।। 1016

184B [३]आलिङ्गनं कुरुवकतरोस्तु युवतेश्शुभः ।
तिलकाख्यस्य वृक्षस्य रमण्याः [४]दर्शनं शुभम् ।। 1017

[५]स्पर्शनं मत्तकाशिन्या माकन्दस्य तरोर्मतः ।
वकुलाख्यतरोर्मूले भामिन्याः [६]उपवेशनम् ।। 1018

कर्णिकारतरो[७]र्वाक्यश्रवणं चोत्तमस्त्रियाः ।
मुखनिःश्वास[८]सम्पर्कः पुन्नागस्य तु सुभ्रुवः ।। 1019

[९]गानं प्रियालुवृक्षस्य कामिन्या वर्धनं भवेत् ।
नमेरुनामकतरोः मानिन्याः [१०]हास उत्तमः ।। 1020

एवं दशानां वृक्षाणां दोहलानि दश क्रमात् ।
सद्यः पुष्पप्रदान्येव शिवतत्त्वमहोदधौ ।। 1021

## अथ शतालङ्काराः

(अलङ्कारशास्त्रे)

[१]उपमालङ्कृतिश्चादौ ततोऽ[२]नन्वयनामकः ।
[३]उपमेयोपमा चैव [४]प्रतीपालङ्कृतिस्तथा ।। 1022

[५]रूपकं [६]परिणामस्स्या[७]दुल्लेखः [८]स्मृतिमांस्तथा ।
[९]भ्रान्तिमांश्चैव [१०]सन्देहालङ्कारो दशमो मतः ।। 1023

[११]अपह्नवस्तथो[१२]त्प्रेक्षालङ्कारोऽ[१३]तिशयोक्तिमान् ।
[१४]दीपकालङ्कृतिः प्रोक्ता तथा [१५]स्यात्तुल्ययोगिता ।। 1024

